।। हरे राम हरे राम राम राम हरे हरे ।।
।। हरे कृष्ण हरे कृष्ण कृष्ण कृष्ण हरे ।।



# ।। श्रीहरिपाठः ।।

श्रीज्ञानेश्वरमहाराज-विरचितस्य हरिपाठस्य संस्कृतानुवादः

- राजेन्द्र दातार

ॐ

ज्ञावदेवकृत-हरिपाठस्य संस्कृतानुवादः

# ।। श्रीहरिपाठः ।।

— राजेन्द्र दातार



## — अनुक्रमणिका —




● मूल्यम् ₹ ६०    ( केवलं स्वीयं वितरणार्थम् )

**संस्कृत-प्रबोधिनी**

101 / A , साई-श्रद्धा , म्हाडा कॉलनी , कुळगाव-बदलापूर ,

जि. ठाणे **PIN** 421503 **दूरभाषांक** – 9421626814

# ॡ मनोगत ॠ

वारकरी संप्रदायात श्रीज्ञानेश्वरमहाराजप्रणीत हरिपाठ म्हणण्याची परंपरा आहे. भक्तिमार्गात नामसाधनेचे असणारे महत्त्व संत ज्ञानेश्वरांनी हरिपाठात विशद करून सांगितले आहे. ज्ञानदेवांनी आपल्या ओघवत्या रसाळ वाणीत सर्वसामान्यांना कळणाऱ्या मराठी भाषेत ही जी अभंगरचना केली आहे, तिचा संस्कृतातून अनुवाद कशासाठी असा प्रश्न पडणे साहजिकच आहे.

भारताची एकात्मता व संस्कृती राखून ठेवणारी, युरोभारतीय भाषांची जननी, परदेशांतही अनेक ठिकाणी अभ्यासिली जाणारी, **आपली संस्कृतभाषा** जपणे, शिकणे, वाढवणे आपले कर्तव्यच नव्हे काय? हरिपाठाच्या माध्यमातून संस्कृतची ओळख व संस्कृतमाध्यमातून हरिपाठाची ओळख निश्चितच होईल. सोबत पदच्छेद व अन्वय दिला असल्याने संस्कृतातील संधिकार्य कळण्यास मदत होईल. त्याचप्रमाणे आजच्या व सातशे वर्षांपूर्वीच्या मराठीभाषेत बराच फरक पडला असल्याने हरिपाठाचा अर्थ समजून घेतानाही काही ठिकाणी संस्कृतचा उपयोग होतो हेही जाणवेल.

स्वरांचे लघुगुरुत्व, हलन्तोच्चार, आघात, इ. बाबतींत असणाऱ्या मराठीच्या लवचिकतेमुळे अभंगांसारखा काव्यप्रकार जरी मुक्तछंदात गणला जात असला तरी हरिपाठातील श्रुतमात्रा विचारात घेता ते मात्रावृत्तासमच वाटते. संस्कृत हरिपाठाच्या रचनेत पहिल्या तीन चरणांत १० मात्रा (= ३/ ३ / गा,गा ) व चौथ्या चरणात ८ मात्रा (= २/ २/ गा,गा ) असे वृत्तलक्षण शक्यतो सांभाळले आहे. मात्र दुसऱ्या व तिसऱ्या चरणांतीचे यमक साधायला काही ठिकाणीच जमले आहे. मुद्रितात व संहितेत अनवधानाने काही चुका राहिल्या असल्यास जाणत्यांनी त्या कृपया क्षान्तिपूर्वक निर्देशित कराव्या ही विनंती.

**राजेन्द्र दातार**

दूरभाषांक 9421626814 email - datarrajendra@gmail.com

ॐ

# ।। श्रीहरिपाठः ।।

## ( १ )

| | |
|---|---|
| देवाचिये द्वारी उभा क्षणभरी । | **द्वारि हि देवस्य क्षणं प्रवृत्तेन ।** |
| तेणे मुक्ति चारी साधियेल्या ।। | **मुक्तिचतुष्कं वै साध्यं ह्येव ।।१।।** |

**पदच्छेदः** — द्वारि हि देवस्य क्षणम् प्रवृत्तेन मुक्तिचतुष्कम् वै साध्यम् हि एव।
**अन्वयः** — देवस्य द्वारि हि क्षणं प्रवृत्तेन ( मनुष्येण ) मुक्तिचतुष्कं वै साध्यं हि एव।
**विमर्शः** — क्षणं प्रवृत्तेन => अत्र आयुषः एकैकक्षणम् इति अपेक्ष्यते।
मुक्तिचतुष्कम् = मुक्तिनां चतुष्कम् । ( सालोक्यम् , सामीप्यम् , सारूप्यम् , सायुज्यम् )

| | |
|---|---|
| हरि मुखे म्हणा हरि मुखे म्हणा । | **नाम हरेर्ग्राह्यं सर्वदा मुखेन ।** |
| पुण्याची गणना कोण करी ।। | **पुण्यमापनं वै कार्यं केन ।।२।।** |

**पदच्छेदः** — नाम हरेः ग्राह्यम् सर्वदा मुखेन पुण्यमापनम् वै कार्यम् केन ।
**अन्वयः** — हरेः नाम सर्वदा मुखेन ग्राह्यम् । ( एवं कृते ) पुण्यमापनं केन वै कार्यम् ?

| | |
|---|---|
| असोनि संसारी जिव्हे वेगु करी । | **प्रपञ्चस्थितेन जिह्वयानुलम्ब्यम् ।** |
| वेदशास्त्र उभारी बाह्या सदा ।। | **वेदशास्त्रदिष्टं नित्यं नाम ।।३।।** |

**पदच्छेदः** — प्रपञ्चस्थितेन जिह्वया अनुलम्ब्यम् वेदशास्त्रदिष्टम् नित्यम् नाम ।
**अन्वयः** — वेदशास्त्रदिष्टं नाम प्रपञ्चस्थितेन जिह्वया नित्यम् अनुलम्ब्यम् ।
**विमर्शः** — वेदशास्त्रदिष्टम् = वेदशास्त्रैः दिष्टम् । ( दिश् ६ प.प.)

| | |
|---|---|
| ज्ञानदेव म्हणे व्यासाचिये खुणा । | **ज्ञानदेव आह व्यासनिदेशोऽयम् ।** |
| द्वारकेचा राणा पांडवां घरीं ।। | **यथा द्वारकेशः पाण्डवगेहे ।।४।।** |

**पदच्छेदः** — ज्ञानदेवः आह व्यासनिदेशः अयम् यथा द्वारकेशः पाण्डवगेहे।
**अन्वयः** — ज्ञानदेवः आह, 'अयं व्यासनिदेशः ( यत् ) द्वारकेशः यथा पाण्डवगेहे ( तथा )। '
**विमर्शः** — पाण्डवगेहे यथा हरिः ( द्वारकेशः, श्रीकृष्णः ) वसतिं कृतवान् , तथैव नाम जपतः गृहे हरिः अवश्यं तिष्ठेत् इति।

## ( २ )

| | |
|---|---|
| चहू वेदीं जाण साही शास्त्रीं कारण । | **चतुर्वेदगीतो हरिः शास्त्रषट्के ।** |
| अठराही पुराणे हरिसी गाती ।। | **हरिः पुराणानां षट्कत्रये च ।।१।।** |

**पदच्छेदः** — चतुर्वेदगीतः हरिः शास्त्रषट्के। हरिः पुराणानां षट्कत्रये च ।।
**अन्वयः** —चतुर्वेदगीतः हरिः (एव) शास्त्रषट्के (वर्णितः)। पुराणानां षट्कत्रये च हरिः एव (वर्णितः)।
**विमर्शः** - शास्त्रषट्कम् => शास्त्राणां षट्कम् (साङ्ख्यम् , योगशास्त्रम् , न्यायः, वैशेषिकशास्त्रम् , पूर्वमीमांसा, उत्तरमीमांसा वा वेदान्तम् ) ; षट्कत्रयम् => षट्कानां त्रयम् = अष्टादश ( पुराणानि ) (ब्रह्मपुराणम् , ब्रह्मवैवर्तपुराणम् , ब्रह्माण्डपुराणम् , अग्निपुराणम् , लिङ्गपुराणम् , पद्मपुराणम् , विष्णुपुराणम् , शिवपुराणम् , नारदपुराणम् , मार्कण्डेयपुराणम् , गरुडपुराणम् , मत्स्यपुराणम् , कूर्मपुराणम्, वराहपुराणम् , वामनपुराणम् , स्कन्दपुराणम् , भागवतपुराणम् , भविष्यपुराणम् )

| | |
|---|---|
| मंथुनी नवनीता तैसे घे अनंता । | **गृह्यतामनन्तो नावनीतमेव ।** |
| वायां व्यर्थ कथा सांडी मार्गु ।। | **कथावर्त्म मोघं त्याज्यं ह्येव ।।२।।** |

**पदच्छेदः** — गृह्यताम् अनन्तः नावनीतम् एव। कथावर्त्म मोघम् त्याज्यम् हि एव ।।
**अन्वयः** — अनन्तः नावनीतम् एव ( अस्ति )। ( सः) गृह्यताम्। कथावर्त्म मोघम् ( अस्ति )। ( तद् ) त्याज्यम् हि एव । **विमर्शः** — नावनीतम् = नवनीतम्

| | |
|---|---|
| एक हरि आत्मा जीवशिव समा । | **हरिश्चैक आत्मा शिवोऽथ जीवस्य।** |
| वाया तू दुर्गमा न घाली मना ।। | **दुर्गमस्य काङ्क्षा व्यर्था ह्येव ।।३।।** |

**पदच्छेदः** - हरिः च एकः आत्मा शिवः अथ जीवस्य। दुर्गमस्य काङ्क्षा व्यर्था हि एव ।
**अन्वयः** — अथ जीवस्य शिवः ( अर्थात् ) आत्मा हरिः च एकः ( एव )। दुर्गमस्य काङ्क्षा व्यर्था हि एव।

| | |
|---|---|
| ज्ञानदेवा पाठ हरि हा वैकुंठ । | **ज्ञानदेव आह हरिस्तु वैकुण्ठम् ।** |
| भरला घनदाट हरि दिसे ।। | **पृक्तचिद्घनोऽयम् आलोक्येत ।।४।।** |

**पदच्छेदः** — ज्ञानदेवः आह हरिः तु वैकुण्ठम् । पृक्तचिद्घनः अयम् आलोक्येत।
**अन्वयः** — ज्ञानदेवः आह, हरिः तु वैकुण्ठम् । अयं ( हरिः) ( वैकुण्ठे ) पृक्तचिद्घनः आलोक्येत।
**विमर्शः** — पृक्तचिद्घनः = पृक्तः चिद्घनः। पृक्तः => पृच् ( ७ प.प.) क्त ( त ) -प्रत्ययान्तम् कर्मणि भू.धा.वि.

## ( ३ )

| | |
|---|---|
| त्रिगुण असार निर्गुण हें सार । | **त्रिगुणता ह्यसारं निर्गुणता सारम् ।** |
| सारासार विचार हरिपाठ ।। | **सारमसारं तत् श्रीहरिपाठे ।।१।।** |

**पदच्छेदः —** त्रिगुणता हि असारम् निर्गुणता सारम् । सारम् असारम् तत् श्रीहरिपाठे ।
**अन्वयः —** त्रिगुणता हि असारम् । निर्गुणता सारम् । ( किं ) सारम् , ( किम् ) असारं तत् श्रीहरिपाठे (कथितम् )।

| | |
|---|---|
| सगुण निर्गुण गुणाचें अगुण । | **गुणैःसह विना वा गुणी चागुणो ऽयम्।** |
| हरिवीण मन व्यर्थ जाय ।। | **हरिं विना चित्तं व्यर्थं ह्येव ।।२।।** |

**पदच्छेदः —** गुणैः सह विना वा गुणी च अगुणः अयम् । हरिम् विना चित्तम् व्यर्थम् हि एव ।
**अन्वयः —** गुणैः सह ( वा ) ( गुणैः) विना वा, अयम् ( हरिः ) गुणी च अगुणः ( च )। हरिं विना चित्तं व्यर्थम् एव हि ( मन्यताम् )।

| | |
|---|---|
| सगुण निर्गुण गुणाचें अगुण । | **गुणैःसह विना वा गुणी चागुणी ऽयम्।** |
| हरिवीण मन व्यर्थ जाय ।। | **हरिं विना चित्तं व्यर्थं ह्येव ।।२।।** |

**पदच्छेदः —** गुणैः सह विना वा गुणी च अगुणी अयम् । हरिम् विना चित्तम् व्यर्थम् हि एव ।
**अन्वयः —** गुणैः सह ( वा ) ( गुणैः) विना वा, अयम् ( हरिः ) गुणी च अगुणी ( च )। हरिं विना चित्तं व्यर्थम् एव हि ( मन्यताम् )।

| | |
|---|---|
| अव्यक्त निराकार नाही ज्या आकार । | **भजेत्तमव्यक्तं निराकारमेकम् ।** |
| जेथोनी चराचर त्यासी भजे ।। | **चराचरं व्यक्तं भूतं यस्मात् ।।३।।** |

**पदच्छेदः —** भजेत् तम् अव्यक्तम् निराकारम् एकम् । चराचरम् व्यक्तम् भूतम् यस्मात् ।
**अन्वयः —** ( मनुष्यः) तम् अव्यक्तं निराकारम् एकं (हरिं) भजेत् यस्मात् (सर्वं) चराचरं व्यक्तं भूतम्।

| | |
|---|---|
| ज्ञानदेवा ध्यानी रामकृष्ण मनीं । | **ज्ञानदेवचित्तं ध्यातरामकृष्णम् ।** |
| अनंत जन्मांनी पुण्य होय ।। | **अनन्तजन्मान्ते प्राप्तं पुण्यम् ।।४।।** |

**पदच्छेदः —** ज्ञानदेवचित्तम् ध्यातरामकृष्णम् । अनन्तजन्मान्ते प्राप्तम् पुण्यम् ।
**अन्वयः —** ज्ञानदेवचित्तं ध्यातरामकृष्णम् । ( एतद् ) पुण्यं ( ज्ञानदेवेन ) अनन्तजन्मान्ते प्राप्तम् ।
**विमर्शः —** ध्यातरामकृष्णम् = ध्यातं रामकृष्णं येन तद् ( चित्तम् )। बहुव्रीहिः।

## ( ४ )

| | |
|---|---|
| भावेवीण भक्ति, भक्तिवीण मुक्ति । | **विना भावभक्ती नैव भक्तिमुक्ती ।** |
| बळेवीण शक्ति बोलू नये ।। | **विना बलं शक्तिर् वाद्या नैव ।।१।।** |

**पदच्छेदः** — विना भावभक्ती न एव भक्तिमुक्ती । विना बलम् शक्तिः वाद्या न एव ।
**अन्वयः** — विना भावभक्ती, भक्तिमुक्ती न एव (शक्ये)। ( यथा ) विना बलं शक्तिः (अपि) वाद्या न एव । **विमर्शः** — भावभक्ती = भावः च भक्तिः च। इतरेतरद्वन्द्वः। भक्तिमुक्ती = भक्तिः च मुक्तिः च। इतरेतरद्वन्द्वः। (भावं च भक्तिं च विना, भक्तिः च मुक्तिः च क्रमशः न शक्या।)

| | |
|---|---|
| कैसेनि दैवत प्रसन्न त्वरित । | **त्वरा किमर्थं वै दैवतप्रसादे ।** |
| उगा राहें निवांत शिणसी वायां ।। | **प्रसह्यतां मोघं कष्टं नैव ।।२।।** |

**पदच्छेदः** — त्वरा किमर्थम् वै दैवतप्रसादे । प्रसह्यताम् मोघम् कष्टम् न एव ।
**अन्वयः** — ( मनुष्येण ) दैवतप्रसादे त्वरा किमर्थं वै ( करणीया )? ( मनुष्येण ) मोघं कष्टं न एव प्रसह्यताम् । **विमर्शः** — कष्टं => कष् ( १ प.प. ) क्त ( त ) -प्रत्ययान्तम् ।

| | |
|---|---|
| सायासें करिसी प्रपंच दिननिशीं । | **अहर्निशं यासान् कुर्वता प्रपञ्चे ।** |
| हरिसी न भजसी कवण्या गुणें ।। | **किं नु तथा यास्यं श्रीहरिमार्गे ।।३।।** |

**पदच्छेदः** — अहर्निशम् यासान् कुर्वता प्रपञ्चे । किम् नु तथा यास्यम् श्रीहरिमार्गे ।
**अन्वयः** — प्रपञ्चे अहर्निशं यासान् कुर्वता ( मनुष्येण ) तथा ( एव ) श्रीहरिमार्गे किं नु यास्यम् ?
**विमर्शः** — यास्यम् => यस् ( ४ आ.प. ) ण्यत्-प्रत्ययान्तम् विध्यर्थि-विशेषणम् ।

| | |
|---|---|
| ज्ञानदेव म्हणे हरिजप करणे । | **ज्ञानदेव आह जपेद् हरिं नित्यम् ।** |
| तुटेल धरणे प्रपंचाचे ।। | **सक्तता विनश्येत् संसारस्य ।।४।।** |

**पदच्छेदः** — ज्ञानदेवः आह जपेद् हरिम् नित्यम् । सक्तता विनश्येत् संसारस्य ।
**अन्वयः** — ज्ञानदेवः आह, 'यः हरिं नित्यं जपेद् , ( तस्य ) संसारस्य सक्तता विनश्येत्।'
**विमर्शः** — सक्तता (= आसक्तिः) => सञ्ज् [सज् ] ( १ प.प.) भू.धा.वि. सक्त + तल् (ता)

## ( ५ )

| | |
|---|---|
| योग याग विधि येणें नोहे सिद्धि । | **सिध्यते न योगो न यागो विधिश्च ।** |
| वायांचि उपाधि दंभ धर्म ।। | **व्यर्थ एव दम्भो धर्म उपाधिः ।।१।।** |

**पदच्छेदः** — सिध्यते न योगः न यागः विधिः च । व्यर्थः एव दम्भः धर्मः उपाधिः।
**अन्वयः** — ( हरिं विना ) योगः न सिध्यते, यागः विधिः च न ( सिध्यते ), दम्भः धर्मः उपाधिः (च ) व्यर्थः एव। **विमर्शः** — उपाधिः ( पुं.) => उप + आ + धा ( ३ उ.प.) + कि ( इ )-प्रत्ययान्तम्

| | |
|---|---|
| भावेंविण देव न कळे निःसंदेह । | **अ-भावे हि देवो न बुध्यो ह्यशङ्कम् ।** |
| गुरुविण अनुभव कैसा कळे ।। | **विना गुरुमशक्या अनुभूतिश्च ।।२।।** |

**पदच्छेदः** — अ-भावे हि देवः न बुध्यः हि अशङ्कम् । विना गुरुम् अशक्या अनुभूतिः च ।
**अन्वयः** — अ-भावे हि ( सति ) देवः , अशङ्कं हि न बुध्यः । ( यथा ) विना गुरुम् अनुभूतिः च अशक्या (अस्ति )।

| | |
|---|---|
| तपेंविण दैवत दिधल्याविण प्राप्त । | **विना तपोदाने कथं दैवताप्ती ।** |
| गुजेंविण हित कोण सांगे ।। | **को वदेद् हितं वै गुह्याभावे ।।३।।** |

**पदच्छेदः** — विना तपोदाने कथम् दैवत-आप्ती। कः वदेत् हितम् वै गुह्य-अभावे।
**अन्वयः** — विना तपोदाने, कथम् दैवत-आप्ती ( शक्ये ) ? गुह्य-अभावे कः वै हितम् वदेत् ?
**विमर्शः** — तपोदाने = तपः च दानम् च। इतरेतरद्वन्द्वः। दैवताप्ती = दैवतं च आप्तिः च। इतरेतरद्वन्द्वः। तपः विना दैवतं न शक्यम् । दानं विना आप्तिः न शक्या। तपः दानं च विना क्रमशः दैवतम् आप्तिः च न शक्या ।

| | |
|---|---|
| ज्ञानदेव सांगे दृष्टांताची मात। । | **ज्ञानदेव आह दृष्टान्तसामर्थ्यम् ।** |
| साधूंचे संगतीं तरणोपाय ।। | **विना साधुसङ्गात् तरणं नैव ।।४।।** |

**पदच्छेदः** — ज्ञानदेवः आह दृष्टान्तसामर्थ्यम् । विना साधुसङ्गात् तरणम् न एव ।
**अन्वयः** — ज्ञानदेवः दृष्टान्तसामर्थ्यम् आह। विना साधुसङ्गात् तरणं न एव ( इत्यपि ज्ञानदेवः आह )।

## ( ६ )

| | |
|---|---|
| साधुबोध झाला तो नुरोनिया ठेला। । | **प्राप्तसाधुबोधो भवेन्नान्यभावः ।** |
| ठायींच मुराला अनुभवें ।। | **अनुभवे स लीनो द्वैतं नैव ।।१।।** |

**पदच्छेदः** — प्राप्तसाधुबोधः भवेत् न अन्यभावः । अनुभवे सः लीनः। द्वैतम् न एव ।
**अन्वयः** — ( यः) प्राप्तसाधुबोधः, ( सः) अन्यभावः न भवेत् । अनुभवे सः लीनः (भवति)। ( तत्र ) द्वैतं न एव ( वर्तते )। **विमर्शः** — प्राप्तसाधुबोधः => प्राप्तः साधुबोधः येन सः। बहुव्रीहिः।
अन्यभावः => अन्यस्मिन् (अन्यविषये ) भावः यस्य सः। बहुव्रीहिः।

| | |
|---|---|
| कापुराची वाती उजळली ज्योति। । | **सुकर्पूरवर्तिर् जोतिता स्वशान्ता ।** |
| ठायींच समाप्ति झाली जैशी ।। | **तथा स्वानुभूतौ भक्तो बोध्य: ।।२।।** |

**पदच्छेद:** — सुकर्पूरवर्ति: जोतिता स्वशान्ता । तथा स्वानुभूतौ भक्त: बोध्य: ।
**अन्वय:** — जोतिता सुकर्पूरवर्ति: ( यथा ) स्वशान्ता ( भवति ), तथा भक्त: स्वानुभूतौ ( लीन: भवति इति ) बोध्य: । **विमर्श:** — जोतिता => जुत् ( १ प.प. ) क्त ( त ) + टाप् ( आ )

| | |
|---|---|
| मोक्षरेखे आला भाग्यें विनटला । | **उपागतो मोक्षं साधुकृपायोगात् ।** |
| साधूंचा अंकिला हरिभक्त ।। | **भाग्यवान्स मान्य: श्रीहरिभक्त: ।।३।।** |

**पदच्छेद:** — उपागत: मोक्षम् साधुकृपायोगात् । भाग्यवान् स: मान्य: श्रीहरिभक्त: ।
**अन्वय:** — साधुकृपायोगात् ( य: भक्त:) मोक्षम् उपागत:। स: श्रीहरिभक्त: भाग्यवान् ( एव ) मान्य:।

| | |
|---|---|
| ज्ञानदेवा गोडी संगति सज्जनीं । | **ज्ञानदेवदिष्ट: साधुसङ्गरुच्या ।** |
| हरि दिसे जनीं वनीं आत्मतत्त्वीं ।। | **हरिश्चात्मतत्त्वे लोकेऽरण्ये ।।४।।** |

**पदच्छेद:** — ज्ञानदेवदिष्ट: साधुसङ्गरुच्या हरि: च आत्मतत्त्वे लोके अरण्ये ।
**अन्वय:** — साधुसङ्गरुच्या ज्ञानदेवदिष्ट: हरि: आत्मतत्त्वे लोके अरण्ये च ( दृश्यते )।
**विमर्श:** — साधुसङ्गरुच्या => साधुसङ्गे रुचि:, तया। ज्ञानदेवदिष्ट: => ज्ञानदेवेन दिष्ट:।

## ( ७ )

| | |
|---|---|
| पर्वताप्रमाणे पातक करणे । | **पर्वतादृशं वै पातकं हि यस्य ।** |
| वज्रलेप होणे अभक्तांसी ।। | **अभक्त: स लिप्तो वज्रेणेव ।।१।।** |

**पदच्छेद:** — पर्वतादृशम् वै पातकम् हि यस्य । अभक्त: स: लिप्त: वज्रेण इव।
**अन्वय:** — यस्य पातकं वै पर्वतादृशं हि , स: अभक्त: वज्रेण इव लिप्त:।

| | |
|---|---|
| नाहीं ज्यासी भक्ति तो पतित अभक्त । | **विना भक्तिभावं पापतितो भूत्वा।** |
| हरिसी न भजत दैवहत ।। | **सो ऽभजन् हरिं वा दैवहतो हि ।।२।।** |

**पदच्छेद:** — विना भक्तिभावम् पापतित: भूत्वा । स: अभजन् हरिम् वा दैवहत: हि ।
**अन्वय:** — य: मनुष्य: विना भक्तिभावं पापतित: भूत्वा ( तिष्ठति ), स: हरिम् अभजन् वा दैवहत: हि (मन्यताम् )।
**विमर्श:** — पापतित: => पत् (१ प.प.) यङ् +क्त (त) - प्रत्ययान्तम्। अतिशयेन पतित:।

| | |
|---|---|
| अनंत वाचाळ बरळती बरळ । | **केचन जल्पाका मृषा हि जल्पन्ति।** |
| त्यां कैसेनि गोपाळ पावे हरि ।। | **श्रीहरिः प्रसन्नः तेषु कथं वै ।।३।।** |

**पदच्छेदः** — केचन जल्पाकाः मृषा हि जल्पन्ति। श्रीहरिः प्रसन्नः तेषु कथं वै ।
**अन्वयः** — ( ये ) केचन जल्पाकाः मृषा हि जल्पन्ति, तेषु श्रीहरिः कथं वै प्रसन्नः ( भवेत् )?

| | |
|---|---|
| ज्ञानदेवा प्रमाण आत्मा हा निधान । | **ज्ञानदेव आह निधानमात्मैव ।** |
| सर्वांघटी पूर्ण एक नांदे ।। | **नन्दति सर्वेषाम् एको देही ।।४।।** |

**पदच्छेदः** — ज्ञानदेवः आह निधानम् आत्मा एव । नन्दति सर्वेषाम् एकः देही ।
**अन्वयः** — ज्ञानदेवः आह, निधानम् आत्मा एव । सर्वेषाम् एकः ( एव ) देही सः नन्दति।
**विमर्शः** — देही => देहिन् ( पुं. प्रथमा ए.व.) = आत्मा

( ८ )

| | |
|---|---|
| संतांचे संगती मनोमार्ग गति । | **सतां सङ्गतौ वै मनोगतिः कार्या ।** |
| आकळावा श्रीपती येणें पंथें ।। | **श्रीपतिश्च बोध्यः पथ्येतस्मिन् ।।१।।** |

**पदच्छेदः** — सताम् सङ्गतौ वै मनोगतिः कार्या । श्रीपतिः च बोध्यः पथि एतस्मिन् ।
**अन्वयः** — ( मनुष्येण ) सतां सङ्गतौ वै मनोगतिः कार्या। एतस्मिन् पथि श्रीपतिः च बोध्यः।
**विमर्शः** – पथि => पथिन् (पुं.) सप्तमी ए.व. । मनोगतिः = मनसः गतिः। श्रीपतिः = श्रियः पतिः (विष्णुः)।

| | |
|---|---|
| रामकृष्ण वाचा भाव हा जीवाचा । | **जपेद् रामकृष्णं जीवशो हि वाचा।** |
| आत्मा जो शिवाचा रामजप ।। | **स्वात्मनि प्रबोधेद् आत्मारामम् ।।२।।** |

**पदच्छेदः** — जपेद् रामकृष्णम् जीवशः हि वाचा । स्वात्मनि प्रबोधेद् आत्मारामम् ।
**अन्वयः** — मनुष्यः जीवशः रामकृष्णं हि वाचा जपेत् । ( तेन सः) स्वात्मनि आत्मारामं प्रबोधेत् ।

| | |
|---|---|
| एक तत्त्व नाम साधिती साधन । | **नाम तत्त्वमेकं साधनमुत्कृष्टम् ।** |
| द्वैताचें बंधन न बाधिजे ।। | **न बाधते द्वैतं मार्गे ऽस्मिञ्च ।।३।।** |

**पदच्छेदः** — नाम तत्त्वम् एकम् साधनम् उत्कृष्टम् । न बाधते द्वैतम् मार्गे अस्मिन् च ।
**अन्वयः** — नाम ( इति ) तत्त्वम् एकम् उत्कृष्टं साधनम् । अस्मिन् च मार्गे द्वैतं न बाधते ।

| | |
|---|---|
| नामामृत गोडी वैष्णवां लाधली । | **वैष्णवैर्हि लब्धं नामतो मधुत्वम् ।** |
| योगियां साधली जीवनकळा ।। | **योगिभिश्च लब्धं जीवनवर्म ।।४।।** |

**पदच्छेदः** — वैष्णवैः हि लब्धम् नामतः मधुत्वम् । योगिभिः च लब्धम् जीवनवर्म।
**अन्वयः** — वैष्णवैः हि नामतः मधुत्वं लब्धम्। योगिभिः च ( नामतः) जीवनवर्म लब्धम्।

| | |
|---|---|
| सत्वर उच्चार प्रह्लादीं बिंबला । | **उद्धवेन लब्धः कृष्णसमो दाता ।** |
| उद्धवा लाधला कृष्णदाता ॥ | **सत्वरं हि नाम्ना प्रह्लादेन** ॥५॥ |

**पदच्छेदः** — उद्धवेन लब्धः कृष्णसमः दाता । सत्वरम् हि नाम्ना प्रह्लादेन ।
**अन्वयः** — उद्धवेन कृष्णसमः दाता लब्धः । प्रह्लादेन नाम्ना सत्वरं हि ( दाता लब्धः)।

| | |
|---|---|
| ज्ञानदेव म्हणे नाम हें सुलभ । | **ज्ञानदेव आह सुलभ्यं हि नाम ।** |
| सर्वत्र दुर्लभ विरळा जाणे ॥ | **गुह्यमिदं जानन् विरलो ह्येव** ॥६॥ |

**पदच्छेदः** — ज्ञानदेवः आह सुलभ्यम् हि नाम । गुह्यम् इदम् जानन् विरलः हि एव ।
**अन्वयः** —ज्ञानदेवः आह, 'सुलभ्यं हि नाम'। इदं गुह्यं जानन् विरलः हि एव ।

## ( ९ )

| | |
|---|---|
| विष्णुविण जप व्यर्थ त्याचें ज्ञान । | **यो जपेन्न विष्णुं तस्य वृथा ज्ञानम्।** |
| रामकृष्णीं मन नाही ज्याचें ॥ | **नैव रामकृष्णे चित्तं तस्य** ॥१॥ |

**पदच्छेदः** — यः जपेत् न विष्णुम् तस्य वृथा ज्ञानम् । न एव रामकृष्णे चित्तम् तस्य ।
**अन्वयः** — यः विष्णुम् न जपेत् तस्य ज्ञानम् वृथा ( अस्ति )। तस्य चित्तम् रामकृष्णे न एव।

| | |
|---|---|
| उपजोनि करंटा नेणे अद्वय वाटा । | **मार्गमद्वयस्य नैव विजानीते ।** |
| रामकृष्णीं पैठा कैसा होय ॥ | **कथं रामकृष्णे चित्तं तस्य** ॥२॥ |

**पदच्छेदः** — मार्गम् अद्वयस्य न एव विजानीते। कथम् रामकृष्णे चित्तम् तस्य ।
**अन्वयः** — अद्वयस्य मार्गं ( यः) न एव विजानीते, तस्य चित्तं रामकृष्णे कथं ( स्यात् )?

| | |
|---|---|
| द्वैताची झाडणी गुरुविण ज्ञान । | **द्वैतमृजा बोध्या गुरुं विना नैव ।** |
| तया कैचें कीर्तन घडेल नामीं ॥ | **कीर्तने मनः किं तस्य रमेत** ॥३॥ |

**पदच्छेदः** — द्वैतमृजा बोध्या गुरुम् विना न एव। कीर्तने मनः किम् तस्य रमेत ।
**अन्वयः** — द्वैतमृजा गुरुं विना न एव बोध्या। तस्य मनः कीर्तने रमेत किम् ?

| | |
|---|---|
| ज्ञानदेव म्हणे सगुण हें ध्यान । | **ज्ञानदेव आह सगुणतार्चकेन ।** |
| नामपाठ मौन प्रपंचाचें ।। | **प्रपञ्चिना मौने ग्राह्यं नाम ।।४।।** |

**पदच्छेदः** — ज्ञानदेवः आह सगुणतार्चकेन । प्रपञ्चिना मौने ग्राह्यम् नाम ।
**अन्वयः** — ज्ञानदेवः आह, 'सगुणतार्चकेन प्रपञ्चिना मौने ( स्थित्वा ) नाम ग्राह्यम् ।'
**विमर्शः** — सगुणतार्चकेन => सगुणतायाः अर्चकः सगुणतार्चकः, तेन।

## ( १० )

| | |
|---|---|
| त्रिवेणीसंगमी नाना तीर्थें भ्रमी । | **नाम्नि नास्ति चित्तं वृथा हि सा भ्रान्तिः।** |
| चित्त नाहीं नामीं तरी तें व्यर्थं ।। | **सङ्गमे त्रिवेण्यां तीर्थक्षेत्रे ।।१।।** |

**पदच्छेदः** — नाम्नि नास्ति चित्तं वृथा सा भ्रान्तिः । सङ्गमे त्रिवेण्यां तीर्थक्षेत्रे । **अन्वयः** — ( यस्य ) चित्तं नाम्नि नास्ति ( तस्य ) भ्रान्तिः ( या ) सङ्गमे, त्रिवेण्यां, तीर्थक्षेत्रे ( वा ) (भवति) सा वृथा हि।

| | |
|---|---|
| नामासी विन्मूख तो नर पापिया । | **नामविन्मुखो ना पापकृद्धि मन्यः ।** |
| हरिवीण धांवया न पवे कोणी ।। | **हरिं विना धावेद् विषमे को वै ।।२।।** |

**पदच्छेदः** — नामविन्मुखः ना पापकृत् हि मन्यः । हरिम् विना धावेत् विषमे कः वै ।
**अन्वयः** — नामविन्मुखः ना पापकृत् हि मन्यः । हरिम् विना विषमे कः वै धावेत् ?
**विमर्शः** — नामविन्मुखः => नाम्नः विन्मुखः। ( पञ्चमीतत्पुरुषः); ना = मनुष्यः ( नृ (पुं.) प्रथमा ए.व.); पापकृत् => पापं करोति इति। ( क्विप्-प्रत्ययान्तम् )

| | |
|---|---|
| पुराणप्रसिद्ध बोलले वाल्मीक । | **उद्धरेत् त्रिलोकं नामसाधनेन ।** |
| नामें तिन्ही लोक उद्धरती ।। | **पुराणप्रसिद्धं वाल्मीकिवचः ।।३।।** |

**पदच्छेदः** — उद्धरेत् त्रिलोकम् नामसाधनेन । पुराणप्रसिद्धम् वाल्मीकिवचः ।
**अन्वयः** — ( मनुष्यः) नामसाधनेन त्रिलोकम् उद्धरेत् ( इति ) पुराण-प्रसिद्धं वाल्मीकिवचः ( अस्ति )।
**विमर्शः** — वाल्मीकिवचः => वाल्मीकेः वचः। (षष्ठीतत्पुरुषः); त्रिलोकम् => त्रीणां लोकानां समाहारः। (समाहारद्वन्द्वः) तत् ।

| | |
|---|---|
| ज्ञानदेव म्हणे नाम जपा हरिचें । | **ज्ञानदेव आह जपेद् हरेर्नाम ।** |
| परंपरा त्याचें कुळ शुद्ध ।। | **भवेत् कुलोद्धर्ता पारम्पर्यम् ।।४।।** |

**पदच्छेदः** — ज्ञानदेवः आह जपेत् हरेः नाम । भवेत् कुलोद्धर्ता पारम्पर्यम् ।
**अन्वयः** — ज्ञानदेवः आह, '( मनुष्यः ) हरेः नाम जपेत् कुलोद्धर्ता ( च ) भवेत् ( इति ) पारम्पर्यम् ।'

## ( ११ )

| | |
|---|---|
| हरि उच्चारणी अनंत पापराशी । | **हरेर्नाम्न उक्तौ क्षणं तिष्ठतो वै ।** |
| जातील लयासी क्षणमात्रें ।। | **पापचयोऽनन्तो नश्येदेव ।।१।।** |

**पदच्छेदः** — हरेः नाम्नः उक्तौ क्षणं तिष्ठतः वै। पापचयः अनन्तः नश्येत् एव ।
**अन्वयः** — हरेः नाम्नः उक्तौ क्षणं वै तिष्ठतः (मनुष्यस्य) अनन्तः पापचयः नश्येत् एव ।
**विमर्शः** — तिष्ठतः => स्था [ तिष्ठ् ] शतृ-प्रत्ययान्तं कर्तरि व.का.धा.वि., पुं. षष्ठी ए.व.

| | |
|---|---|
| तृण अग्निमेळें समरस झालें । | **तृणं वह्निना वै यथा वह्निरूपम् ।** |
| तैसें नामें केलें जपतां हरि ।। | **तथा नामरूपो भक्तो नाम्ना ।।२।।** |

**पदच्छेदः** — तृणम् वह्निना वै यथा वह्निरूपम् । तथा नामरूपः भक्तः नाम्ना ।
**अन्वयः** — यथा वह्निना तृणं वह्निरूपम् वै ( भवति ), तथा नाम्ना भक्तः नामरूपः ( भवति )।

| | |
|---|---|
| हरि उच्चारण मंत्र पैं अगाध । | **हरेर्नाममन्त्रः समुच्चार्यते ऽयम् ।** |
| पळे भूतबाध भेणें याचे ।। | **याति भूतबाधा भीतिर्दूरम् ।।३।।** |

**पदच्छेदः** — हरेः नाममन्त्रः समुच्चार्यते अयम् । याति भूतबाधा भीतिः दूरम् ।
**अन्वयः** — हरेः अयं नाममन्त्रः ( यत्र ) समुच्चार्यते । ( ततः) भूतबाधा भीतिः ( च ) दूरं याति ।

| | |
|---|---|
| ज्ञानदेव म्हणे हरि माझा समर्थ । | **ज्ञानदेव आह हरिर्मे समर्थः ।** |
| न करवे अर्थ उपनिषदां ।। | **असावगन्तव्यो नोपनिषद्भिः ।।४।।** |

**पदच्छेदः** — ज्ञानदेवः आह हरिः मे समर्थः । असौ अवगन्तव्यः न उपनिषद्भिः ।
**अन्वयः** — ज्ञानदेवः आह, 'हरिः मे समर्थः (अस्ति )। असौ ( हरिः) उपनिषद्भिः न अवगन्तव्यः।'

## ( १२ )

| | |
|---|---|
| तीर्थ व्रत नेम भावेंविण सिद्धि । | **जना भो अभावे वृथा व्रतं तीर्थम् ।** |
| वायांचि उपाधि करिसी जना ।। | **नेम उपाधिश्च नो सिध्येत ।।१।।** |

**पदच्छेदः** — जनाः भोः अभावे वृथा व्रतम् तीर्थम् । नेमः उपाधिः च नो सिध्येत ।
**अन्वयः** — भोः जनाः, अ-भावे व्रतं तीर्थं ( च ) वृथा ( एव )। (अ-भावे ) नेमः उपाधिः च नो सिध्येत।
**विमर्शः** — नो = न ; अ-भावे = भावे न सति।

| | |
|---|---|
| भावबळें आकळें येऱ्हवीं नाकळे । | **आमलकमिवायं करतलेऽवगम्यः।** |
| करतळीं आंवळे तैसा हरि ।। | **हरिर्भावशक्त्या नान्यः पन्थाः ।।२।।** |

**पदच्छेदः —** आमलकम् इव अयम् करतले अवगम्यः। हरिः भावशक्त्या न अन्यः पन्थाः।
**अन्वयः —** करतले आमलकम् इव अयं हरिः भावशक्त्या अवगम्यः। न अन्यः पन्थाः।
**विमर्शः** — आमलकम् = आमलकफलम् इत्यर्थेन नपुंसके ; पन्थाः => पथिन् (पुं.) प्रथमा एकवचनम्।

| | |
|---|---|
| पारियाचा रवा घेतां भूमिवरी । | **भूमितो विचेतुं कणान् पारदस्य ।** |
| यत्न परोपरी साधन तैसें ।। | **तथा नाम साद्धुं कार्या यत्नाः ।।३।।** |

**पदच्छेदः —** भूमितः विचेतुम् कणान् पारदस्य । तथा नाम साद्धुम् कार्याः यत्नाः ।
**अन्वयः —** भूमितः पारदस्य कणान् विचेतुम् ( यथा यत्नाः कार्याः), तथा ( एव ) यत्नाः नाम साद्धुं कार्याः। **विमर्शः** — विचेतुम् => वि + चि ( ५ उ.प.) तुमन्तम् ; साद्धुं => साध् ( ५ उ.प.) तुमन्तम्।

| | |
|---|---|
| ज्ञानदेव म्हणे निवृत्ति निर्गुण । | **ज्ञानदेव आह निर्गुणताज्ञानम् ।** |
| दिधलें संपूर्ण माझ्या हातीं ।। | **निवृत्तिना मह्यं पूर्णं दत्तम् ।।४।।** |

**पदच्छेदः** — ज्ञानदेवः आह निर्गुणताज्ञानम् । निवृत्तिना मह्यं पूर्णं दत्तम् ।
**अन्वयः** — ज्ञानदेवः आह, 'निवृत्तिना मह्यं निर्गुणता-ज्ञानं पूर्णं दत्तम् ।'

## ( १३ )

| | |
|---|---|
| समाधी हरिची समसुखेंवीण। । | **हरौ समाधेयं समसुखाद् विना नो ।** |
| न साधेल जाण द्वैतबुद्धि। ।। | **तन्न चेद्धि विद्याद् द्वैते बुद्धिः ।।१ ।।** |

**पदच्छेदः —** हरौ समाधेयम् समसुखात् विना नो । तद् न चेद् हि विद्यात् द्वैते बुद्धिः।
**अन्वयः** — ( मनुष्येण ) समसुखात् विना हरौ समाधेयं नो ( शक्यम् )। तद् ( समसुखं ) न चेद् हि (तस्य) बुद्धिः द्वैते ( इति ) विद्यात् । **विमर्शः** — नो = न

| | |
|---|---|
| बुद्धीचें वैभव अन्य नाहीं दुजें । | **नास्ति किमप्यन्यद् वैभवं हि बुद्धेः ।** |
| एक्या केशवराजें सकळ सिद्धि ।। | **सर्वसिद्धिदाता केशवराजः ।।२।।** |

**पदच्छेदः** – न अस्ति किम् अपि अन्यत् वैभवम् हि बुद्धेः। सर्वसिद्धिदाता केशवराजः।
**अन्वयः** – बुद्धेः किम् अपि अन्यत् वैभवं हि न अस्ति। सर्वसिद्धिदाता केशवराजः।

| | |
|---|---|
| ऋद्धि सिद्धि निधी अवघीच उपाधि । | **निधिर्ऋद्धिसिद्धी केवलं ह्युपाधिः।** |
| जंव त्या परमानंदी मन नाहीं ।। | **नास्ति यस्य चित्तं परमानन्दे ।।३।।** |

**पदच्छेदः** — निधिः ऋद्धिसिद्धी केवलम् हि उपाधिः। न अस्ति यस्य चित्तम् परमानन्दे ।
**अन्वयः** — यस्य चित्तं परमानन्दे न अस्ति ( तस्य कृते ) निधिः ऋद्धिसिद्धी च केवलम् उपाधिः हि।
**विमर्शः** — ऋद्धिसिद्धी => ऋद्धिः च सिद्धिः च। इतरेतरद्वन्द्वः।

| | |
|---|---|
| ज्ञानदेवीं रम्य रमलें समाधान । | **हरौ रम्यमाणे मनो यस्य नित्यम् ।** |
| हरीचें चिंतन सर्वकाळ ।। | **लब्धसमाधानो ज्ञानेशोऽयम् ।।४।।** |

**पदच्छेदः** — हरौ रम्यमाणम् मनः यस्य नित्यम् । लब्धसमाधानः ज्ञानेशः अयम् ।
**अन्वयः** — यस्य मनः नित्यं हरौ रम्यमाणं, (सः) अयं ज्ञानेशः लब्धसमाधानः (अस्ति)।
**विमर्शः** — लब्धसमाधानः => लब्धं समाधानं येन सः। बहुव्रीहिः।

## ( १४ )

| | |
|---|---|
| नित्य सत्य मित हरिपाठ ज्यासी । | **सत्यमाचरेद् यः सदा हरेः पाठम् ।** |
| कळिकाळ त्यासी न पाहें दृष्टी ।। | **दृष्टितः स आरात् कलिकालस्य ।।१।।** |

**पदच्छेदः** — सत्यमाचरेत् यः सदा हरेः पाठम् । दृष्टितः सः आरात् कलिकालस्य ।
**अन्वयः** —यः सदा हरेः पाठं सत्यं समाचरेत् , सः कलिकालस्य दृष्टितः आरात् ( भवेत् )।

| | |
|---|---|
| रामकृष्ण उच्चार अनंतराशी तप । | **हरे राम कृष्ण तपोवचांसीति ।** |
| पापाचे कळप पळती पुढें ।। | **यापयन्ति दूरं पापगणांश्च ।।२।।** |

**पदच्छेदः** — हरे राम कृष्ण तपोवचांसि इति । यापयन्ति दूरम् पापगणान् च ।
**अन्वयः** — हरे राम कृष्ण इति तपोवचांसि पापगणान् दूरं यापयन्ति च ।

| | |
|---|---|
| हरि हरि हरि मंत्र हा शिवाचा । | **हरे हरे ह्येतं हरस्याथ मन्त्रम् ।** |
| म्हणती जे वाचा तयां मोक्ष ।। | **जपन्तश्च वाचा मोक्षं यान्ति ।।३।।** |

**पदच्छेदः** — हरे हरे हि एतम् हरस्य अथ मन्त्रम् । जपन्तः च वाचा मोक्षम् यान्ति ।
**अन्वयः** — अथ हरे हरे हि एतं हरस्य मन्त्रं वाचा जपन्तः ( जनाः) मोक्षं च यान्ति ।

| | |
|---|---|
| ज्ञानदेवा पाठ नारायणनाम । | **ज्ञानदेवलब्धिर् निजोत्तमस्थानम् ।** |
| पाविजे उत्तम निजस्थान ।। | **पठित्वा हि नाम नारायणस्य ।।४।।** |

**पदच्छेदः —** ज्ञानदेवलब्धिः निजोत्तमस्थानम् । पठित्वा हि नाम नारायणस्य ।
**अन्वयः —** निजोत्तमस्थानम् ( इति ) ज्ञानदेवलब्धिः नारायणस्य नाम पठित्वा हि ( शक्या )।

## ( १५ )

| | |
|---|---|
| एक नाम हरि द्वैतनाम दुरी । | **नाम हरेरेकं दूरयति द्वैतम् ।** |
| अद्वैतकुसरी विरळा जाणें ।। | **आरभतेऽद्वैतं विरलो ह्येव ।।१ ।।** |

**पदच्छेदः** — नाम हरेः एकम् दूरयति द्वैतम् । आरभते अद्वैतम् विरलः हि एव ।
**अन्वयः** — हरेः एकम् नाम द्वैतं दूरयति । ( यः) अद्वैतम् आरभते ( सः) विरलः हि एव ।

| | |
|---|---|
| समबुद्धि घेतां समान श्रीहरि । | **यो हरिं समास्ते समधिया हि तस्य ।** |
| शमदमांवरी हरि झाला ।। | **शमदमेशिता वै श्रीहरिरेव ।।२ ।।** |

**पदच्छेदः** — यः हरिम् समास्ते समधिया हि तस्य। शमदमेशिता वै श्रीहरिः एव ।
**अन्वयः** — यः समधिया हि हरिम् समास्ते तस्य शम-दम-ईशिता वै श्रीहरिः एव ।
**विमर्शः** — समधिया => समा धीः समधीः ( कर्मधारयः), तया।

| | |
|---|---|
| सर्वांघटी राम देहांदेहीं एक । | **सर्वकार्यतिष्ठन् द्योतयन् समं च ।** |
| सूर्य प्रकाशक सहस्त्ररश्मी ।। | **रविः सहस्त्रांशुर् ह्येकतमोऽसौ ।।३ ।।** |

**पदच्छेदः** — सर्वकार्यतिष्ठन् द्योतयन् समं च । रविः सहस्त्रांशुर् ह्येकतमो ऽसौ ।
**अन्वयः** — असौ ( हरिः) सर्वकार्यतिष्ठन् समं च द्योतयन् एकतमः सहस्त्रांशुः रविः हि ( एव )।

| | |
|---|---|
| ज्ञानदेवा चित्तीं हरिपाठ नेमा । | **पूर्वजन्मतो वै हरिं पठन् नेमी ।** |
| मागिलिया जन्मा मुक्त झालो ।। | **असौ ज्ञानदेवो जीवन् मुक्तः ।।४ ।।** |

**पदच्छेदः** — पूर्वजन्मतः वै हरिम् पठन् नेमी । असौ ज्ञानदेवः जीवन् मुक्तः ।
**अन्वयः** — पूर्वजन्मतः वै हरिं पठन् नेमी ( इति ) असौ ज्ञानदेवः जीवन् ( सन् अपि ) मुक्तः।

## ( १६ )

| | |
|---|---|
| हरिनाम जपे तो नर दुर्लभ । | **रामकृष्णनाम सुलभ्यं तु वाचा ।** |
| वाचेसि सुलभ रामकृष्ण ।। | **जपन् हरिं बुद्ध्या दुर्लभ्यो ना ।।१ ।।** |

**पदच्छेदः** — रामकृष्णनाम सुलभ्यम् तु वाचा । जपन् हरिम् बुद्ध्या दुर्लभ्यः ना ।

**अन्वयः** — रामकृष्णनाम तु वाचा सुलभ्यम् । ( परन्तु ) बुद्ध्या हरिं जपन् ना दुर्लभ्यः ( अस्ति )।
**विमर्शः** — ना => नृ (= मनुष्य) प्रथमा एकवचनम्।

| | |
|---|---|
| रामकृष्ण नामीं उन्मनी साधिली । | **उन्मनीस्थितौ ना रामकृष्णनाम्ना ।** |
| तयासी लाधली सकळ सिद्धि ।। | **समग्रां च सिद्धिं लभते कामम् ।।२।।** |

**पदच्छेदः** — उन्मनीस्थितौ ना रामकृष्णनाम्ना । समग्राम् च सिद्धिम् लभते कामम् ।
**अन्वयः** — उन्मनीस्थितौ ना रामकृष्णनाम्ना समग्रां च सिद्धिं कामं लभते ।

| | |
|---|---|
| सिद्धि बुद्धि धर्म हरिपाठीं आले । | **सिद्धिबुद्धिधर्मा हरेरन्वयास्तान् ।** |
| प्रपंची निवाले साधुसंगें ।। | **शामयेत् प्रपञ्चे साधोः सङ्गात् ।।३।।** |

**पदच्छेदः** — सिद्धिबुद्धिधर्माः हरेः अन्वयाः तान् । शामयन् प्रपञ्चे साधोः सङ्गात् ।
**अन्वयः** — सिद्धिबुद्धिधर्माः हरेः अन्वयाः। प्रपञ्चे ( मनुष्यः) तान् साधोः सङ्गात् शामयेत् ।
**विमर्शः** — सिद्धिबुद्धिधर्माः => सिद्धिः च बुद्धिः च धर्माः च । ( इतरेतरः)

| | |
|---|---|
| ज्ञानदेवीं नाम रामकृष्ण ठसा । | **असौ ज्ञानदेवो रामकृष्णलक्ष्मा ।** |
| येणें दशदिशा आत्माराम ।। | **दशदिशोऽनुपश्येद् आत्मारामम् ।।४।।** |

**पदच्छेदः** — असौ ज्ञानदेवः रामकृष्णलक्ष्मा । दशदिशः अनुपश्येत् आत्मारामम् ।
**अन्वयः** — रामकृष्णलक्ष्मा असौ ज्ञानदेवः दशदिशः आत्मारामम् अनुपश्येत् ।
**विमर्शः** — रामकृष्णलक्ष्मा => रामकृष्ण ( इति ) लक्ष्म यस्य सः। (अन्-अन्तः)

## ( १७ )

| | |
|---|---|
| हरिपाठकीर्ति मुखें जरी गाय । | **कीर्तयेद् मुखेन हरेः पाठमेनम् ।** |
| पवित्रचि होय देह त्याचा ।। | **पवित्रो हि भूयात् कायस्तस्य ।।१।।** |

**पदच्छेदः** — कीर्तयेत् मुखेन हरेः पाठम् एनम् । पवित्रः हि भूयात् कायः तस्य । **अन्वयः** — ( यः) हरेः एनं पाठं मुखेन कीर्तयेत् तस्य कायः पवित्रः हि भूयात् । **विमर्शः** — भूयात् - आशीर्लिङ् ।

| | |
|---|---|
| तपाचे सामर्थ्यें तपिन्नला अमूप । | **तपस्तपन्नेतत् समर्थः प्रकामम् ।** |
| चिरंजीव कल्प वैकुंठीं नांदे ।। | **नन्दति वैकुण्ठे चिरमाकल्पम् ।।२।।** |

**पदच्छेदः** — तपः तपन् एतत् समर्थः प्रकामम् । नन्दति वैकुण्ठे चिरमाकल्पम् ।
**अन्वयः** — एतत् तपः तपन् प्रकामं समर्थः ( भूत्वा ) वैकुण्ठे चिरम् आकल्पं नन्दति।

| | |
|---|---|
| मातृ पितृ भ्राता सगोत्र अपार । | **भ्रातृभिः पितृभ्यां लभ्यते सगोत्रैः।** |
| चतुर्भुज नर होऊन ठेले ।। | **चतुर्भुजत्वं च वैकुण्ठे ऽस्मिन्** ।।३।। |

**पदच्छेदः** — भ्रातृभिः पितृभ्याम् लभ्यते सगोत्रैः । चतुर्भुजत्वम् च वैकुण्ठे अस्मिन् ।
**अन्वयः** — ( तस्य ) भ्रातृभिः पितृभ्यां सगोत्रैः ( अपि) अस्मिन् वैकुण्ठे चतुर्भुजत्वं च लभ्यते।
**विमर्शः** —चतुर्भुजत्वं => विष्णुत्वं, विष्णुपदे वासः

| | |
|---|---|
| ज्ञान गूढ गम्य ज्ञानदेवा लाधलें । | **ज्ञानमिदं गूढं निवृत्तिना दत्तम्** । |
| निवृत्तीने दिधले माझ्या हातीं ।। | **लब्धवान् निकामं ज्ञानेशो ऽयम्** ।।४।। |

**पदच्छेदः** — ज्ञानम् इदम् गूढम् निवृत्तिना दत्तम् । लब्धवान् निकामम् ज्ञानेशः अयम् ।
**अन्वयः** — निवृत्तिना दत्तम् इदम् गूढं ज्ञानम् अयं ज्ञानेशः निकामं लब्धवान् ।

## ( १८ )

| | |
|---|---|
| हरिवंशपुराण हरिनामकीर्तन । | **भजेद्धरेर्नाम वंशपुराणं च** । |
| हरिविण सौजन्य नेणें कांहीं ।। | **हरेर्ऋते तस्य सौजन्यं नो** ।।१।। |

**पदच्छेदः** — भजेत् हरेः नाम वंशपुराणम् च । हरेर्ऋते तस्य सौजन्यम् नो ।
**अन्वयः** — हरेः नाम वंशपुराणं च ( यः मनुष्यः) भजेत् , तस्य सौजन्यं हरेः ऋते ( अन्यत् ) नो ( भवेत्)।
**विमर्शः** —वंशपुराणम् => हरिवंशपुराणम्

| | |
|---|---|
| तया नरा लाधलें वैकुंठ जोडलें । | **विन्दते हि धाम नरः स वैकुण्ठम्** । |
| सकळही घडलें तीर्थाटन ।। | **समस्ततीर्थानां पुण्यं चैव** ।।२।। |

**पदच्छेदः** — विन्दते हि धाम नरः सः वैकुण्ठम् । समस्ततीर्थानाम् पुण्यम् च एव ।
**अन्वयः** — सः नरः वैकुण्ठं हि धाम विन्दते। ( सः) समस्ततीर्थानां पुण्यं च एव ( विन्दते )।

| | |
|---|---|
| मनोमार्गें गेला तो येथें मुकला । | **रहयते ह लाभं स्वैरमना यो ना** । |
| हरिपाठीं स्थिरावला तोचि धन्य ।। | **अन्वयन् हरिं वै धन्यो मन्यः** ।।३।। |

**पदच्छेदः** — रहयते ह लाभम् स्वैरमनाः यः ना । अन्वयन् हरिम् वै धन्यः मन्यः ।।
**अन्वयः** — यः ना स्वैरमनाः ( सः) लाभं रहयते ह। ( यः) हरिम् अन्वयन् वै (वर्तते) (सः) धन्यः मन्यः।
**विमर्शः** — स्वैरमनाः => स्वैरं मनः यस्य सः। (स्वैरमनस् .. चन्द्रमस् इव )। ना = नरः (नृ प्रथमा ए.व.) कं लाभम् रहयते ? उपरि उक्तं वैकुण्ठधाम, समस्ततीर्थानां पुण्यं च।

| | |
|---|---|
| ज्ञानदेवा गोडी हरिनामाची जोडी । | **हरेर्नामयुग्मे रुची रामकृष्णे ।** |
| रामकृष्णीं आवडी सर्वकाळ ।। | **सदा सर्वकालं ज्ञानेशस्य ।।४।।** |

**पदच्छेदः** — हरेः नामयुग्मे रुचिः रामकृष्णे । सदा सर्वकालम् ज्ञानेशस्य ।
**अन्वयः** — हरेः रामकृष्णे ( इति ) नामयुग्मे ज्ञानेशस्य रुचिः सदा सर्वकालम् (अस्ति )।

## ( १९ )

| | |
|---|---|
| वेदशास्त्रप्रमाण श्रुतींचे वचन । | **वेदशास्त्रसारं श्रुतिप्रमाणं च ।** |
| एक नारायण सार जप ।। | **नाम जपेदेकं नारायणेति ।।१ ।।** |

**पदच्छेदः** — वेदशास्त्रसारम् श्रुतिप्रमाणम् च । नाम जपेत् एकम् नारायण इति ।
**अन्वयः** — ( यद् ) वेदशास्त्रसारं श्रुतिप्रमाणं च ( तद् ) एकं नाम नारायण इति (मनुष्यः) जपेत् ।
**विमर्शः** — नारायण इति सम्बुद्धौ अत्र

| | |
|---|---|
| जप तप कर्म हरिविण धर्म । | **हरेर्नाम नो चेत् श्रमार्थो हि धर्मः ।** |
| वाउगाचि श्रम व्यर्थ जाय ।। | **जपस्तपः कर्म सर्वं व्यर्थम् ।।२ ।।** |

**पदच्छेदः** — हरेः नाम नो चेत् श्रमार्थः हि धर्मः । जपः तपः कर्म सर्वम् व्यर्थम् ।
**अन्वयः** — हरेः नाम नो चेत् धर्मः श्रमार्थो हि ( भवेत् ), जपः तपः कर्म च सर्वं व्यर्थं (भवेत् )।
**विमर्शः** — श्रमार्थः => श्रमाय अयम् । चतुर्थी तत्पुरुषः।

| | |
|---|---|
| हरिपाठें गेले ते निवांतचि ठेले । | **गता हरेः पाठं रता हि तत्रैव ।** |
| भ्रमर गुंतले सुमनकळिके ।। | **पुष्पगतो भृङ्गो मग्नो ह्येव ।।३ ।।** |

**पदच्छेदः** — गताः हरेः पाठम् रताः हि तत्र एव । पुष्पगतः भृङ्गः मग्नः हि एव ।
**अन्वयः** — ( ये ) हरेः पाठं गताः ( ते ) तत्र एव रताः हि ( भवन्ति ), ( यथा ) भृङ्गः पुष्पगतः ( तत्र ) एव मग्नः हि ( भवति )। **विमर्शः** — पुष्पगतः => पुष्पं गतः। द्वितीया तत्पुरुषः।

| | |
|---|---|
| ज्ञानदेवा मंत्र हरिनामाचें शस्त्र । | **नाम हरेरेव बिभ्रतो हि शस्त्रम् ।** |
| यमें कुळगोत्र वर्जियेलें ।। | **यमो गृहाद् दूरं ज्ञानेशस्य ।।४।।** |

**पदच्छेदः** — नाम हरेः एव बिभ्रतः हि शस्त्रम् । यमः गृहात् दूरम् ज्ञानेशस्य।
**अन्वयः** — हरेः नाम एव शस्त्रम् बिभ्रतः हि ज्ञानेशस्य गृहात् यमः दूरम् ( तिष्ठति )।
**विमर्शः** — बिभ्रतः => भृ (३ उ.प.- प.प.) शतृ-प्रत्ययान्तम् (व.का.धा.वि.) षष्ठी एकवचनम्।

## ( २० )

| | |
|---|---|
| नामसंकीर्तन वैष्णवांची जोडी । | **नामकीर्तने वै वैष्णवाः सुयुक्ताः ।** |
| पापें अनंत कोटी गेलीं त्यांची ।। | **अनन्तधाघांसि नश्यन्ते ह ।।१।।** |

**पदच्छेदः** — नामकीर्तने वै वैष्णवाः सुयुक्ताः । अनन्तधा अघांसि नश्यन्तीह ।
**अन्वयः** — वैष्णवाः नामकीर्तने वै सुयुक्ताः ( भवन्ति, अतः तेषाम् ) अनन्तधा ( विद्यमानानि ) अघांसि इह नश्यन्ति । **विमर्शः** — अघांसि => अघस् ( नपुं.); अघांसि = पापानि

| | |
|---|---|
| अनंत जन्मांचे तप एक नाम । | **अनन्तजन्मानां तपः समं नाम ।** |
| सर्व मार्ग सुगम हरिपाठ ।। | **सुगम एष मार्गः श्रीहरिपाठः ।।२।।** |

**पदच्छेदः** — अनन्तजन्मानाम् तपः समम् नाम । सुगमः एषः मार्गः श्रीहरिपाठः ।
**अन्वयः** — अनन्तजन्मानां तपः समं नाम ( अस्ति )। एषः मार्गः ( नाम ) श्रीहरिपाठः सुगमः ( अस्ति)।

| | |
|---|---|
| योग याग क्रिया धर्माधर्म माया । | **योगयागमाया धर्म इहाधर्मः ।** |
| गेले ते विलया हरिपाठें ।। | **क्रियास्ता विलीनाः श्रीहरिपाठे ।।३।।** |

**पदच्छेदः** — योगयागमायाः धर्मः इह अधर्मः। क्रियाः ताः विलीनाः श्रीहरिपाठे ।
**अन्वयः** — योगयागमायाः, धर्मः, अधर्मः, ताः क्रियाः ( च ) इह श्रीहरिपाठे विलीनाः (भवन्ति )।

| | |
|---|---|
| ज्ञानदेवीं यज्ञ याग क्रिया धर्म । | **यज्ञ एष यागः क्रिया च वै धर्मः ।** |
| हरिविण नेम नाही दुजा ।। | **हरिं विना नान्यो ज्ञानेशस्य ।।४।।** |

**पदच्छेदः** — यज्ञः एषः यागः क्रिया च वै धर्मः । हरिम् विना न अन्यः ज्ञानेशस्य ।
**अन्वयः** — एषः यज्ञः, यागः, क्रिया च वै ( कोऽपि ) धर्मः (अस्तु ); हरिं विना न अन्यः धर्मः ज्ञानेशस्य (विद्यते)।

## ( २१ )

| | |
|---|---|
| काळवेळ नाम उच्चारितां नाही । | **न नाम्ने विशिष्टे धृते कालवेले ।** |
| दोन्ही पक्ष पाहीं उद्धरती ।। | **उभे ऽपि शुद्ध्येते नामोच्चारे ।।१।।** |

**पदच्छेदः** — न नाम्ने विशिष्टे धृते कालवेले । उभे अपि शुद्ध्येते नामोच्चारे ।
**अन्वयः** — नाम्ने विशिष्टे धृते कालवेले न ( आवश्यके )। उभे अपि नामोच्चारे शुद्ध्येते ।

**विमर्शः** — कालवेले कालः च वेला च। इतरेतद्वन्द्वः।

| | |
|---|---|
| रामकृष्ण नाम सर्व दोषां हरण । | **हन्ति सर्वदोषान् रामकृष्णनाम ।** |
| जडजीवां तारण हरि एक ।। | **तारयिता जीवान् श्रीहरिरेव ।।२।।** |

**पदच्छेदः** — हन्ति सर्वदोषान् रामकृष्णनाम । तारयिता जीवान् श्रीहरिः एव ।
**अन्वयः** — रामकृष्णनाम सर्वदोषान् हन्ति । जीवान् तारयिता श्रीहरिः एव अस्ति।

| | |
|---|---|
| हरिनाम सार जिव्हा या नामाची । | **हरेर्नाम सारं जिह्वयानुलग्नम् ।** |
| उपमा त्या दैवाची कोण वानी ।। | **तस्य सुदैवस्य ह्युपमा कान्या ।।३।।** |

**पदच्छेदः** — हरेः नाम सारम् जिह्वया अनुलग्नम् । तस्य सुदैवस्य हि उपमा का अन्या ।
**अन्वयः** — हरेः नाम ( यत् ) सारम् ( एव तत् ) ( यः) जिह्वया अनुलग्नं ( करोति ) तस्य सुदैवस्य हि का अन्या उपमा ?

| | |
|---|---|
| ज्ञानदेवा सांग झाला नामपाठ । | **ज्ञानदेवसिद्धो हरेः सार्थपाठः ।** |
| पूर्वजां वैकुंठमार्ग सोपा ।। | **पूर्वजैः सुगम्यं वैकुण्ठं च ।।४।।** |

**पदच्छेदः** — ज्ञानदेवसिद्धः हरेः सार्थपाठः । पूर्वजैः सुगम्यम् वैकुण्ठम् च ।
**अन्वयः** — हरेः सार्थपाठः ज्ञानदेवसिद्धः ( यतः) पूर्वजैः च वैकुण्ठं सुगम्यम् (कृतम् आसीत् ) ।

## ( २२ )

| | |
|---|---|
| नित्यनेम नामीं ते प्राणी दुर्लभ । | **जपन् नाम नित्यं दुर्लभो हि नेमी।** |
| लक्ष्मीवल्लभ तयांजवळी ।। | **समीपे हि तस्य लक्ष्मीकान्तः ।।१।।** |

**पदच्छेदः** — जपन् नाम नित्यम् दुर्लभः हि नेमी । समीपे हि तस्य लक्ष्मीकान्तः ।
**अन्वयः** — ( हरेः) नाम नित्यं जपन् नेमी दुर्लभः हि। ( यः कः अपि एतादृक् स्यात् ) तस्य समीपे लक्ष्मीकान्तः हि तिष्ठति ( इति मन्यताम् )।

| | |
|---|---|
| नारायण हरि नारायण हरि । | **लभेद् गृहे भुक्तिं मुक्तिचतुष्कं च ।** |
| भुक्ती मुक्ती चारी घरीं त्यांच्या ।। | **वाचि हरे यस्य नारायणेति ।।२।।** |

**पदच्छेदः** — लभेत् गृहे भुक्तिम् मुक्तिचतुष्कम् च । वाचि हरे यस्य नारायण इति ।
**अन्वयः** — यस्य वाचि 'हरे, नारायण' इति ( जपः अस्ति ), ( सः) गृहे भुक्तिं मुक्तिचतुष्कं च लभेत् ।

**विमर्शः** — मुक्तिचतुष्कम् => मुक्तिनां चतुष्कम् ( सालोक्यम् , सामीप्यम् , सारूप्यम्, सायुज्यम् )

| | |
|---|---|
| हरिविण जन्म तो नरकचि पैं जाणा । | **हरिं विना जीवेद् नरकयेव वाच्यः।** |
| यमाचा पाहुणा प्राणी होय ।। | **स मान्यो ऽतिथिर्हि यमराजस्य ।।३।।** |

**पदच्छेदः** — हरिम् विना जीवेत् नरके एव वाच्यः। सः मान्यः अतिथिः हि यमराजस्य।
**अन्वयः** — ( यः) हरिं विना जीवेत् ( सः) नरके एव ( इति ) वाच्यः। सः यमराजस्य अतिथिः हि मान्यः।

| | |
|---|---|
| ज्ञानदेव पुसे निवृत्तीसी चाड । | **ज्ञानदेव आह निवृत्तिना प्रोक्तम् ।** |
| गगनाहूनि वाड नाम आहे ।। | **वरीय आकाशात् नामक्षेत्रम् ।।४।।** |

**पदच्छेदः** — ज्ञानदेवः आह निवृत्तिना प्रोक्तम् । वरीयः आकाशात् नामक्षेत्रम् ।
**अन्वयः** — ज्ञानदेवः आह,'आकाशात् नामक्षेत्रं वरीयः इति निवृत्तिना प्रोक्तम् ।' इति।
**विमर्शः** — वरीयः => वरीयस् ( नपुं.) प्रथमा एकवचनम्

## ( २३ )

| | |
|---|---|
| सात पांच तीन दशकांचा मेळा । | **त्रिपञ्चसप्तानां दशानां च मेलः।** |
| एकतत्त्वी कळा दावी हरि ।। | **कार्य एकतत्त्वे श्रीहरिलीला ।।१।।** |

**पदच्छेदः** — त्रिपञ्चसप्तानाम् दशानाम् च मेलः । कार्यः एकतत्त्वे श्रीहरिलीला ।
**अन्वयः** — त्रिपञ्चसप्तानां दशानां च मेलः एकतत्त्वे कार्यः ( इति ) श्रीहरिलीला ।
**विमर्शः** — त्रिपञ्चसप्तानाम् => त्रिपञ्चसप्ताः, तेषाम्। त्रिपञ्चसप्ताः => त्रयः ( गुणाः), पञ्च ( महाभूतानि ), सप्त ( धातवः ) च। दशानाम् => दश ( इन्द्रियाणि ), तेषाम् ।

| | |
|---|---|
| तैसें नव्हे नाम सर्व मार्गी वरिष्ठ । | **इदं नाम वर्त्म नैव कष्टदं वै ।** |
| येथें कांहीं कष्ट न लागती ।। | **वर्त्मनां वरिष्ठं बोध्यं लोके ।।२।।** |

**पदच्छेदः** — इदम् नाम वर्त्म न एव कष्टदम् वै । वर्त्मनां वरिष्ठम् बोध्यम् लोके ।
**अन्वयः** — इदं नाम ( इति ) वर्त्म कष्टदं वै न एव। ( तद् ) वर्त्मनां वरिष्ठम् ( इति) लोके बोध्यम् ।

| | |
|---|---|
| अजपा जपणें उलट प्राणाचा । | **ये ऽजपाजपे ते विलोमितप्राणाः।** |
| तेथेंही मनाचा निर्धारु असे ।। | **मनोनिग्रहस्तैः कार्यो ह्येव ।।३।।** |

**पदच्छेदः** — ये अजपा-जपे ते विलोमितप्राणाः । तैः मनोनिग्रहः कार्यः हि एव ।

**अन्वयः** —ये अजपा-जपे ( रताः) ते विलोमितप्राणाः ( सन्ति )। तैः मनोनिग्रहः ( तु ) कार्यः हि एव ( भवति )। **विमर्शः** — विलोमितप्राणाः विलोमिताः प्राणाः येषां / यैः ते

| | |
|---|---|
| ज्ञानदेवा जिणें नामेंविण व्यर्थ । | **काम्यतीह वर्त्म रामकृष्णनाम ।** |
| रामकृष्णीं पंथ क्रमीयेला ।। | **विना यन्न जीवेद् ज्ञानेशो ऽयम् ।।४।।** |

**पदच्छेदः** — काम्यति इह वर्त्म रामकृष्णनाम । विना यत् न जीवेत् ज्ञानेशः अयम् ।
**अन्वयः** — अयं ज्ञानेशः इह रामकृष्णनाम वर्त्म काम्यति , विना यत् ( सः) न जीवेत् ।

## ( २४ )

| | |
|---|---|
| जप तप कर्म क्रिया नेम धर्म। । | **तपो जपो नेमाः क्रियाकर्मधर्माः।** |
| सर्वां घटीं राम भावशुद्ध ।। | **भावयन्ति रामं सर्वघटस्थम् ।।१।।** |

**पदच्छेदः** — तपः जपः नेमाः क्रियाकर्मधर्माः । भावयन्ति रामम् सर्वघटस्थम् ।
**अन्वयः** — तपः, जपः, नेमाः, क्रियाकर्मधर्माः ( एते सर्वे ) सर्वघटस्थं रामम् ( एव ) भावयन्ति ।
**विमर्शः** — क्रियाकर्मधर्माः => क्रियाः कर्माणि धर्माः च। इतरेतरद्वन्द्वः।

| | |
|---|---|
| न सोडी रे भावो टाकी रे संदेहो । | **अहित्वा च भावं विहाय सन्देहम् ।** |
| रामकृष्णीं टाहो नित्य फोडी ।। | **रामकृष्णनाम चक्षेताहो ।।२।।** |

**पदच्छेदः** — अहित्वा च भावम् विहाय सन्देहम् । रामकृष्णनाम चक्षेत अहो ।
**अन्वयः** — अहो, ( मनुष्यः) भावम् अहित्वा, सन्देहं च विहाय रामकृष्णनाम चक्षेत ।
**विमर्शः** — चक्षेत => चक्ष् २ आ.प. विधिलिङ्

| | |
|---|---|
| जात वित्त गोत कुळ शीळ मात । | **सत्वरं सभावं भजेत्तं न चिन्त्यम् ।** |
| भजे कां त्वरित भावनायुक्त ।। | **धनं कुलं शीलं जातिर्गोत्रम् ।।३।।** |

**पदच्छेदः** — सत्वरम् सभावम् भजेत् तम् न चिन्त्यम् धनम् कुलम् शीलम् जातिः गोत्रम् ।
**अन्वयः** — ( मनुष्यः) तं ( हरिम् ) सत्वरं सभावं भजेत् । ( स्वस्य) धनं कुलं शीलं जातिः गोत्रं (मनुष्येण) न चिन्त्यम् ।

| | |
|---|---|
| ज्ञानदेवा ध्यानीं रामकृष्ण मनीं । | **सदा रामकृष्णे ध्यानमतो गेहम् ।** |
| तेणें वैकुंठभुवनी घर केलें ।। | **कृतं हि वैकुण्ठे ज्ञानेशेन ।।४।।** |

**पदच्छेदः** — सदा रामकृष्णे ध्यानम् अतः गेहम् । कृतम् हि वैकुण्ठे ज्ञानेशेन।
**अन्वयः** — सदा रामकृष्णे ध्यानम् (भवेत् ), अतः ज्ञानेशेन वैकुण्ठे हि गेहं कृतम् ।

## ( २५ )

| | |
|---|---|
| जाणीव नेणीव भगवंतीं नाही । | **ज्ञानमनुज्ञानं भगवतीह नैव** । |
| हरिउच्चारणीं पाही मोक्ष सदा ।। | **मोक्षयन् हि नित्यं नामोच्चारः** ।।१।। |

**पदच्छेदः** — ज्ञानम् अनुज्ञानम् भगवति इह न एव । मोक्षयन् हि नित्यम् नामोच्चारः।
**अन्वयः** — इह भगवति ज्ञानम् अनुज्ञानं च न एव ( वर्तते )। नित्यं नामोच्चारः मोक्षयन् हि ( वर्तते )।

| | |
|---|---|
| नारायण हरि उच्चार नामाचा । | **यत्र समुच्चारो हरे नारायण** । |
| तेथें कळिकाळाचा रीघ नाही ।। | **प्रवेशो न तत्र कलिकालस्य** ।।२।। |

**पदच्छेदः** — यत्र समुच्चारः हरे नारायण । प्रवेशः न तत्र कलिकालस्य ।
**अन्वयः** — यत्र हरे नारायण (इति) समुच्चारः (भवेत् ), तत्र कलिकालस्य प्रवेशः न (भवेत् )।

| | |
|---|---|
| तेथील प्रमाण नेणवे वेदांसी । | **महत्त्वं हि तस्य बुध्यते न वेदैः** । |
| तें जीवजंतूंसी केंवी कळे ।। | **कथं जन्तुभिस्तद् ह्याकल्येत** ।।३।। |

**पदच्छेदः** — महत्त्वम् हि तस्य बुध्यते न वेदैः । कथम् जन्तुभिः तद् हि आकल्येत ।
**अन्वयः** — तस्य महत्त्वम् हि वेदैः न बुध्यते। कथम् हि तद् जन्तुभिः आकल्येत ?

| | |
|---|---|
| ज्ञानदेवा फळ नारायणपाठ । | **ज्ञानदेवलब्धं सर्वत्र वैकुण्ठम्** । |
| सर्वत्र वैकुंठ केले असे ।। | **फलं हि तत् सर्वं हरिपाठस्य** ।।४।। |

**पदच्छेदः** — ज्ञानदेवलब्धम् सर्वत्र वैकुण्ठम् । फलम् हि तत् सर्वम् हरिपाठस्य ।
**अन्वयः** — सर्वत्र वैकुण्ठम् ( इति यद् ) ज्ञानदेवलब्धम् (अस्ति ), तत् सर्वम् हरिपाठस्य हि फलम्।

## ( २६ )

| | |
|---|---|
| एक तत्त्व नाम दृढ धरीं मना । | **धरेद् नामतत्त्वं दृढं मनस्येकम्** । |
| हरिसी करुणा येईल तुझी ।। | **ध्रुवं तमापश्येत् करुणार्द्रहरिः** ।।१।। |

**पदच्छेदः** – धरेत् नामतत्त्वम् दृढम् मनसि एकम् । ध्रुवम् तम् आपश्येत् करुणार्द्रहरिः।
**अन्वयः** — ( यः) एकं नामतत्त्वं मनसि दृढं धरेत् , तम् करुणार्द्रहरिः ध्रुवम् आपश्येत् ।

| | |
|---|---|
| तें नाम सोपें रे राम कृष्ण गोविंद । | **सुलभमिदं नाम सद्‌गदेद्धि वाचा।** |
| वाचेसी सद्गद जपे आधीं ।। | **जपेद् रामकृष्ण गोविन्देति ।।२।।** |

**पदच्छेदः** — सुलभम् इदम् नाम सद्‌गदेत् हि वाचा। जपेत् रामकृष्ण गोविन्द इति ।
**अन्वयः** — इदं नाम सुलभं हि (अस्ति )। ( मनुष्यः) ( तद् ) वाचा सद्‌गदेत् । ( मनुष्यः) ( हे ) रामकृष्ण, (हे) गोविन्द इति जपेत् ( च ) ।

| | |
|---|---|
| नामापरतें तत्त्व नाही रे अन्यथा । | **नामतो वरीयो नैव तत्त्वमन्यत् ।** |
| वायां आणिका पंथा जाशी झणी ।। | **त्वरा पथान्येन मोघा ह्येव ।।३।।** |

**पदच्छेदः** — नामतः वरीयः न एव तत्त्वम् अन्यत् । त्वरा पथा अन्येन मोघा हि एव ।
**अन्वयः** — नामतः वरीयः अन्यत् तत्त्वं न एव । अन्येन पथा त्वरा मोघा हि एव ।
**विमर्शः** — वरीयः => वरीयस् ( नपुं.) प्रथमा ए.व.

| | |
|---|---|
| ज्ञानदेवा मौन जप माळ अंतरीं । | **मौनमास्थितोऽपि मालयान्तरे तु ।** |
| धरोनि श्रीहरि जपे सदा ।। | **हरिं जपत्येव ज्ञानेशोऽयम् ।।४।।** |

**पदच्छेदः** – मौनम् आस्थितः अपि मालया अन्तरे तु। हरिम् जपति एव ज्ञानेशः अयम् ।
**अन्वयः** — अयं ज्ञानेशः मौनम् आस्थितः अपि मालया अन्तरे तु हरिं जपति एव।

( २७ )

| | |
|---|---|
| सर्व सुख गोडी साही शास्त्रें निवडी । | **हरौ सर्वसौख्यं शास्त्रषट्कदिष्टम् ।** |
| रिकामा अर्धघडी राहूं नको ।। | **यापयेत् क्षणार्धं व्यर्थं नैव ।।१।।** |

**पदच्छेदः** — हरौ सर्वसौख्यम् शास्त्रषट्कदिष्टम् । यापयेत् क्षणार्धम् व्यर्थम् न एव।
**अन्वयः** — शास्त्रषट्कदिष्टं सर्वसौख्यं हरौ ( विद्यते अतः मनुष्यः) क्षणार्धम् अपि व्यर्थं न एव यापयेत्।
**विमर्शः** — पाठभेदः – *साही शास्त्रें निवडी* इति स्थाने *सर्वशास्त्रनिवडी* इति। एवं सति ***शास्त्रषट्कदिष्टम्*** इति स्थाने ***सर्वशास्त्रदिष्टम्*** इति भवेत् ।

| | |
|---|---|
| लटिका व्यवहार सर्व हा संसार । | **मनुष्यो जगत्यां व्यवहरन्नलीकम् ।** |
| वायां येरझार हरीविण ।। | **हरिं विना तस्य भ्रमणं व्यर्थम् ।।२।।** |

**पदच्छेदः** - मनुष्यः जगत्याम् व्यवहरन् अलीकम्। हरिम् विना तस्य भ्रमणम् व्यर्थम्।
**अन्वयः** –( यः) मनुष्यः जगत्याम् अलीकं व्यवहरन् (अस्ति), तस्य भ्रमणं हरिं विना व्यर्थम् (एव)।

**विमर्शः** – जगत्याम् => जगती (स्त्री.) सप्तमी ए.व.। ( जगती = जगत् )

| | |
|---|---|
| नाम मंत्र जप कोटी जाईल पाप । | **जपेद् नाममन्त्रं पापकोटिनिघ्नम् ।** |
| रामकृष्णीं संकल्प धरुनि राहे ।। | **धृती रामकृष्णे सङ्कल्पेत ।।३।।** |

**पदच्छेदः** – जपेत् नाममन्त्रम् पापकोटिनिघ्नम्। धृतिः रामकृष्णे सङ्कल्पेत।
**अन्वयः** — पापकोटिनिघ्नं नाममन्त्रं (मनुष्यः) जपेत् धृतिः च रामकृष्णे सङ्कल्पेत।
**विमर्शः** - पापकोटिनिघ्नम् => पापकोटिं निहन्ति सः पापकोटिनिघ्नः, तम्। ( उपपदतत्पुरुषः)

| | |
|---|---|
| निजवृत्ति काढी सर्व माया तोडी । | **निवर्त्य स्ववृत्तिं निरस्येद्धि मायाम्।** |
| इंद्रियां सवडी लपों नको ।। | **इन्द्रियानुभावं नो सेवेत ।।४।।** |

**पदच्छेदः** — निवर्त्य स्ववृत्तिम् निरस्येत् हि मायाम्। इन्द्रियानुभावम् नो सेवेत।
**अन्वयः** — ( मनुष्यः) स्ववृत्तिं निवर्त्य मायां हि निरस्येत् इन्द्रियानुभावं च नो सेवेत।
**विमर्शः** — नो = न; निरस्येत् => निर् + अस् (४ प.प.) विधिलिङ्

| | |
|---|---|
| तीर्थी व्रतीं भाव धरी रे करुणा । | **दृतिर्व्रते तीर्थे यत्र दया शान्तिः ।** |
| शांति दया पाहुणा हरि करी ।। | **हरिस्तद्गृहं वै अभ्यागच्छेत् ।।५।।** |

**पदच्छेदः** — दृतिः व्रते तीर्थे यत्र दया शान्तिः। हरिः तद्गृहम् वै अभ्यागच्छेत्।
**अन्वयः** — यत्र व्रते तीर्थे ( च ) दृतिः, दया शान्तिः ( च विद्यते ), तद्गृहम् वै हरिः अभ्यागच्छेत् ।
**विमर्शः** — दृतिः => दृ ( ६ आ.प.) क्तिन् ( ति )-प्रत्ययान्तम् । दृतिः = आदरः।

| | |
|---|---|
| ज्ञानदेवा प्रमाण निवृत्तिदेवीं ज्ञान । | **गुरोर्ज्ञानराज आह सप्रमाणम् ।** |
| समाधि संजीवन हरिपाठ ।। | **समाधौ स जीवन् हरिपाठ इति ।।६।।** |

**पदच्छेदः** — गुरोः ज्ञानराजः आह सप्रमाणम् । समाधौ सः जीवन् हरिपाठः इति ।
**अन्वयः** - गुरोः ( यत् लब्धम् तत् ) ज्ञानराजः सप्रमाणम् आह, '( यतः) सः जीवन् ( एव) समाधौ (वर्तते)।' इति हरिपाठः।

**।।श्रीकृष्णार्पणमस्तु।।**

।। ॐ तत्सद्ब्रह्मार्पणमस्तु ।।

**(मूलः हरिपाठः एतावान् एव। कुत्रचित् अधिकाः पाठाः / अभङ्गाः उपलभ्यन्ते, ते अग्रे दत्ताः।)**

## ( २८ )

| | |
|---|---|
| अभंग हरिपाठ असती अठ्ठावीस । | **विंशतिकः साष्टो हरेरेष पाठः ।** |
| तरिले विश्वासें ज्ञानदेव ।। | **कृतः सविश्वासं ज्ञानेशेन ।।१।।** |

**पदच्छेदः** — एषः विंशतिकः साष्टः हरेः पाठः । कृतः सविश्वासम् ज्ञानेशेन ।
**अन्वयः** — एषः विंशतिकः साष्टः हरेः पाठः ज्ञानेशेन सविश्वासम् कृतः। **विमर्शः** — साष्टः => अष्टभिः सह। बहुव्रीहिः। विंशतिकः साष्टः = अष्टाविंशतिकः। (अभङ्गानाम् अष्टाविंशतिः पाठेऽस्मिन्)

| | |
|---|---|
| नित्य पाठ करी इंद्रायणीतीरी । | **इन्द्रायणीतीरे पठेदिमं नित्यम् ।** |
| होय अधिकारी सर्वथा तो ।। | **सर्वथाधिकारी भूयादेव ।।२।।** |

**पदच्छेदः** —इन्द्रायणीतीरे पठेत् इमम् नित्यम्। सर्वथाधिकारी भूयात् एव।
**अन्वयः** - ( यः) इन्द्रायणीतीरे इमं [हरिपाठं] नित्यं पठेत् , (सः) सर्वथाधिकारी भूयात् एव।
**विमर्शः** — भूयात् => आशीर्लिङ्

| | |
|---|---|
| असावें एकाग्रीं स्वस्थ चित्त मन । | **मनो हरौ हित्वा भवेत् स्वस्थचित्तम् ।** |
| उल्हासें करून स्मरण जीव ।। | **जीवशः स्मरेत् तं सोल्लासं वै ।।३।।** |

**पदच्छेदः** — मनो हरौ हित्वा भवेत् स्वस्थचित्तम् । जीवशः स्मरेत् तं सोल्लासम् वै ।**अन्वयः** — ( मनुष्यः) मनो हरौ हित्वा स्वस्थचित्तं भवेत् । ( मनुष्यः) जीवशः तं [हरिं ] सोल्लासं स्मरेत्।
**विमर्शः** — सोल्लासम् = उल्लासेन सह। संस्कृते उल्लासः इति एव। ( मराठ्याम् उल्हासः इति रूढः)

| | |
|---|---|
| अंतकाळीं तैसा संकटाचे वेळीं । | **आगते ऽन्तकाले सङ्कटागमे च ।** |
| हरि तया सांभाळी अंतर्बाह्य ।। | **उद्धरेद् हरिस्तं ह्यान्तर्बाह्यम् ।।४।।** |

**पदच्छेदः** — आगते अन्तकाले सङ्कटागमे च । उद्धरेत् हरिः तम् हि आन्तर्बाह्यम् ।
**अन्वयः** — अन्तकाले सङ्कटागमे च आगते, हरिः तम् आन्तर्बाह्यं उद्धरेद् हि।

| | |
|---|---|
| संत सज्जनांनी घेतली प्रचीति । | **साधुजनैरेतत् प्रतीतं निकामम् ।** |
| आळशी मंदमति केवीं तरे ।। | **ये ऽलसाश्चमूढा नानुभवेयुः ।।५।।** |

**पदच्छेदः** — साधुजनैः एतत् प्रतीतम् निकामम् । ये अलसाः च मूढाः न अनुभवेयुः ।
**अन्वयः** — साधुजनैः एतत् निकामं प्रतीतम् । ये अलसाः मूढाः च ( ते ) ( एतत् ) न अनुभवेयुः।
**विमर्शः** — प्रतीतम् => प्रति + इ ( २ प.प. ) क्त ( त )- प्रत्ययान्तं भू.धा. विशेषणम्

| | |
|---|---|
| श्रीगुरु-निवृत्तिवचन ते प्रेमळ । | **निवृत्तिनाथस्य गुरुप्रेमवाचा ।** |
| तोषला तात्काळ ज्ञानदेव ।। | **ज्ञानदेव आप्नोत् सद्यस्तोषम् ।।६।।** |

**पदच्छेदः** — निवृत्तिनाथस्य गुरुप्रेमवाचा । ज्ञानदेवः आप्नोत् सद्यः तोषम् ।
**अन्वयः** — निवृत्तिनाथस्य गुरुप्रेमवाचा ज्ञानदेवः सद्यः तोषम् आप्नोत् ।

## ( २९ )

| | |
|---|---|
| कोणाचें हें घर हा देह कोणाचा । | **कस्य गेहमेतद् देह एष कस्य ।** |
| आत्माराम त्याचा तोचि जाणे ।। | **स्वयं हि जानीयाद् आत्मारामम् ।।१।।** |

**पदच्छेदः** — कस्य गेहम् एतद् देहः एषः कस्य स्वयम् हि जानीयाद् आत्मारामम् ।
**अन्वयः** — एतद् गेहं कस्य? एषः देहः कस्य? (मनुष्यः) स्वयं हि आत्मारामं जानीयात्।

| | |
|---|---|
| मी तूं हा विचार विवेकें शोधावा । | **स्वकत्वं परत्वं विवेकेन मार्ग्यम् ।** |
| गोविंदा माधवा याचि देहीं ।। | **माधवो हि देहे गोविन्दोऽस्ति ।।२।।** |

**पदच्छेदः** — स्वकत्वम् परत्वम् विवेकेन मार्ग्यम् माधवः हि देहे गोविन्दः अस्ति। **अन्वयः** — स्वकत्वं परत्वं ( मनुष्यः) विवेकेन मार्ग्यम्। गोविन्दः माधवः (अस्मिन् ) देहे हि अस्ति (सः मार्ग्यः)।

| | |
|---|---|
| देही ध्याता ध्यान त्रिपुटींवेगळा । | **ध्यातृतनुध्यानात् त्रिपुट्या विभिन्नः।** |
| सहस्र दळीं उगवला सूर्य जैसा ।। | **दले सहस्राख्ये भास्वानुद्यन् ।।३।।** |

**पदच्छेदः** — ध्यातृतनुध्यानात् त्रिपुट्याः विभिन्नः दले सहस्राख्ये भास्वान् उद्यन् ।
**अन्वयः** — ध्यातृतनुध्यानात् नाम त्रिपुट्याः विभिन्नः उद्यन् भास्वान् सहस्राख्ये दले (विद्यते )।
**विमर्शः — उद्यन् => उद् + इ ( २ प.प.) व.का.धा.वि.**

| | |
|---|---|
| ज्ञानदेवा म्हणे नयनाची ज्योति । | **ज्ञानदेव आह जनाः प्रजानीत ।** |
| या नांवें रूपें ती तुम्ही जाणा ।। | **नामनि स्वरूपे नेत्रज्योतिः ।।४।।** |

**पदच्छेदः** — ज्ञानदेवः आह (भोः) जनाः, प्रजानीत । नामनि स्वरूपे नेत्रज्योतिः।
**अन्वयः** — ज्ञानदेवः आह, '(भोः) जनाः, ( यूयम् ) नामनि स्वरूपे विद्यमानं नेत्रज्योतिः प्रजानीत।'

इति श्रीसन्तज्ञानेश्वरमहाराजविरचितस्य हरिपाठस्य
राजेन्द्रशर्मणा कृतः संस्कृतानुवादः सम्पूर्णः।
।। ॐ तत्सद्ब्रह्मार्पणमस्तु ।।

## २. पसायदान

( श्रीज्ञानेश्वरमहाराजविरचित विश्वशान्तिप्रार्थना )

आता विश्वात्मकें देवें । येणें वाग्यज्ञें तोषावें ।
तोषोनि मज द्यावें । पसायदान हें ।।१।।

जे खळांची व्यंकटी सांडो। तया सत्कर्मी रति वाढो।
भूतां परस्परें पडो । मैत्र जीवाचे ।।२।।

दुरितांचे तिमिर जावो। विश्व स्वधर्मसूर्ये पाहो ।
जो जें वांछील तो तें लाहो । प्राणिजात ।।३।।

वर्षत सकल मंगळी । ईश्वरनिष्ठांची मांदियाळी ।
अनवरत भूमंडळी। भेटतु भूतां ।।४।।

चलत्कल्पतरूंचे आरव । चेतना चिन्तामणीचे गांव ।
बोलते जे अर्णव । पीयूषाचे ।।५।।

चन्द्रमे जे अलांछन । मार्तण्ड जे तापहीन ।
ते सर्वांही सदा सज्जन । सोयरे होतु ।।६।।

किंबहुना सर्वसुखीं । पूर्ण होऊनि तिहीं लोकीं।
भजि जो आदिपुरुषीं। अखण्डित ।।७।।

आणि ग्रन्थोपजीविये । विशेषीं लोकीं इयें ।
दृष्टादृष्टविजयें । होआवें जी ।।८।।

येथ म्हणे श्रीविश्वेश्वरावो । हा होइल दान पसावो।
येणें वरें ज्ञानदेवो । सुखिया झाला ।।९।।

ॐ शान्तिः शान्तिः शान्तिः।

——×——

## ३. प्रसाददानम् ।।

श्रीज्ञानेश्वरमहाराजविरचिता विश्वशान्तिप्रार्थना

( मराठी-पसायदानस्य संस्कृतानुवादः। )

**अथ विश्वेशस्सर्वात्मकः । वाग्यज्ञादिह तुष्यतु ।**
**तुष्ट्वेदं मे प्रयच्छतु । प्रसाददानम् ।।१।।**

**खलत्वं नश्यतु खलानाम् । सत्कार्ये ते रमन्ताम् ।**
**परस्परसख्यं वर्धताम् । जीवभूते ।।२।।**

**तमस्तु नश्यतु दुरितानाम् । स्वधर्मसूर्यः प्रकाशताम् ।**
**वाञ्छानुरूपं लभताम् । प्राणिमात्रम् ।।३।।**

**वर्षतु सकलमङ्गलम् । ईश्वरनिष्ठानां मण्डलम् ।**
**समेतु भूमौ अनवरतम् । भूतैस्सार्धम् ।।४।।**

**चलत्कल्पतरूणां सन्निधिः । तिष्ठति चेतना-चिन्तामणिः ।**
**अर्णवास्तेऽपि स्वनन्ति । पीयूषस्य ।।५।।**

**अलाञ्छिता ये चन्द्रमसः । मार्तण्डा ये तापहीनाः ।।**
**सदा ते सर्वेषां सन्तः । बान्धवास्सन्तु ।।६।।**

**किं बहुना सर्वसुखेन । पूर्णतां यातु त्रिलोकम् ।**
**भजताम् आदिपुरुषम् । अखण्डितम् ।।७।।**

**ग्रन्थस्य ये ऽ भ्यासकाः । लोके ऽ स्मिन् ते विशेषाः ।**
**दृष्टादृष्टविजयं । प्राप्नुवन्तु ।।८।।**

**तथास्तु दानप्रसादः । इति विश्वेशराजस्य वचः।**
**वरेणैतेन ज्ञानदेवः । सुखस्वरूपः ।।९।।**

**स्पष्टीकरणम्** — 'चलत्कल्पतरूणां सन्निधिः। तिष्ठति चेतना-चिन्तामणिः।' इत्यस्य अन्वयः 'यत्र चलत्कल्पतरूणां सन्निधिः भवति तत्र चेतना-चिन्तामणिः तिष्ठति ' इति ।

——×——

# ४. अठरा श्लोकी गीता

अथ श्रीमद्भगवद्गीतायाः सारांशरूपात्मिका अठरा श्लोकी गीता

ॐ नमो भगवते वासुदेवाय।

( १ )

संजय सांगे धृतराष्ट्रासी कुरुक्षेत्रवार्ता
पांडवांसवे धार्तराष्ट्र हे भिडती युद्धाला
पार्थ माधवा म्हणे,'कसा मी मारू स्वजनांना?'
कुलक्षयाच्या पापभयाने टाकि धनुष्याला

( २ )

हरी सांगतो "शरीर नश्वर विषाद कसला पार्था?
जन्ममृत्युचे चक्र चालते अविनाशी हा आत्मा
जिंकलास तर राज्य भोगशिल समरी मरता स्वर्ग
समत्वबुद्धी ठेव क्षत्रिया युद्ध हेच कर्तव्य

( ३ )

कर्म टाळणे योग्य नव्हे रे मनुष्यास या जगती
नियत कर्म ते करीत जावे सोडुनिया आसक्ती
कामरूप शत्रूस मारुनी इंद्रियांस जिंकावे
मन-बुद्धीच्या पलीकडिल ते आत्मतत्त्व जाणावे

( ४ )

अवतारी मी, मला जाणता बद्ध न होशिल कर्मी
कर्मज सारे यज्ञ, कर्मही विलीन होते ज्ञानी
ज्ञानासम रे पवित्र नाही दुजे काहि या जगती
संशय सारुनि दूर, अर्जुना उभा रहा संग्रामी

( ५ )

पार्थ माधवा पुसे, 'योग की श्रेयस्कर संन्यास ?'
माधव पार्था वदे,"उभय ही नेती मोक्षाप्रत
संन्यासी तो निरहंकारी स्थितप्रज्ञ विजितात्मा
योगाविण संन्यास कठिण रे, कर्मयोग साधावा

( ६ )

अभ्यासाने ध्यान साधता कर्म-शमन होतसे
योगसाधना अपूर्ण तरिही जन्मांतरि फळतसे
ज्ञानी-कर्मी-संन्याशाहुनि योगी मज आवडे
करितो आत्मोद्धार मला जो श्रद्धेने भजतसे

( ७ )

जीवन मी तन्मात्ररूप मी जगी व्यापलो सर्व
मम मायेच्या त्रिगुणी भावे मोहित होती लोक
श्रद्धा ज्याची जशी ज्यावरी मिळते फळही त्यास
दुस्तर माया तरून मिळतो मला जाणता भक्त

( ८ )

देहान्तीचा भाव ज्यापरी मिळते गती तशीच
लढताना स्मर मला अर्जुना पावशील मद्‌धाम
एकाक्षर ॐकाररूपही मीच सनातन ब्रह्म
योगी स्मरतो मला निरंतर मीच सच्चिदानंद

( ९ )

प्रकृति-कारणे प्रलय-पुनर्भव चक्र चालते सृष्टीचे
अधिष्ठान मी, मला जाणता तुटेल बंधन कर्माचे
अनित्य सुखलालसा टाकुनी येती मजला जे शरण
नित्य उपासक भक्तांचा मी चालवितो योगक्षेम

( १० )

ऐक अर्जुना, विशेष माझे वैभव संक्षेपाने
सामवेद, अश्वत्थवृक्ष मी, बीज सर्वभूतांचे
भूतचेतना, कामदुधा, यमराज, काल मी, रुद्र
केवळ एकांशाने भरलो जगात ओत:प्रोत

( ११ )

दिव्यदृष्टि घे, पहा अर्जुना, विश्वरूप दुर्लभ्य"
अथांग तेजोरूप हरीचे पहात राही पार्थ
घाबरला परि रूप पाहता महाभयंकर घोर
विनवी हरिला, हरी वदतसे, धरुनि रूप सामान्य

( १२ )

"अव्यक्ताच्या उपासनेहुन सगुण भक्ति सोपी
भक्त मला आवडे स्थिरमती, कर्मफलत्यागी
अभ्यासाहुन ज्ञान, ध्यान ते श्रेष्ठ, तोहि त्याग
श्रद्धा मजवर ठेवी निश्चित शांति मिळे त्यास

( १३ )

ब्रह्म सूक्ष्मतम सर्वव्याप्त हे, ज्ञान निखळ अध्यात्म
इंद्रियदेहा क्षेत्र जाण तू, आत्मा तो क्षेत्रज्ञ
प्रकृतिसंग-कारणे भोगतो सुखदु:खे हा पुरुष
अलिप्त साक्षी हृदयेश्वर तो, मिळे जाणता मोक्ष

( १४ )

सत्त्वगुणहि तो सुखसंगाने बद्ध करी जीवासी
रजोगुणहि तो कर्मफलाने, प्रमादमोहे तमही
त्रिगुणीमायेपलीकडे जो मला पाहतो द्रष्टा
ब्रह्मरूप होऊन चुकवितो जन्ममृत्युचा फेरा

( १५ )

पसरे बहु संसारवृक्ष हा कर्मबंधिनीशाख
तोडुनि असंगशस्त्राने ही जाणुन घ्यावे मूळ
क्षराक्षराच्या पार पुरुष तो उत्तम घे जाणून
अंशरुपाने जीवभूत होऊन भोगतो भोग

( १६ )

ऋजुता, शुद्धी, धैर्य, नम्रता, मोक्षक गुण हे दैवी
भोगी, भ्रष्ट, घमेंडी, आसुर अधम गतीला जाती
टाळुनिया नरकाचे कारण काम, क्रोध नि लोभ
श्रेयस्कर ते कर्म करावे शास्त्रविधी-अनुसार

( १७ )

सात्त्विक आणिक राजस, तामस जसे जयाचे बीज
तशीच आवड, तशीच श्रद्धा, तसेच त्याचे कर्म
मोक्षपदा जो इच्छी त्याने म्हणूनिया ॐकार
यज्ञ-दान-तप तत्सद् ब्रह्मणि अर्पित जावे नित्य

( १८ )

संग, फलाशा सोडुन करणे स्वभावापरी कर्म
कळले का तुज मर्म सख्या?" मग वदे धनुर्धर पार्थ
'संभ्रम सरला, कृतार्थ झाले जीवन हे योगेशा
संजय सांगे, 'जय हा निश्चित, जेथे भगवद्गीता'

इति श्रीमद्भगवद्गीतायाः सारांशरूपात्मिका
राजेन्द्रशर्मणा विरचिता अठराश्लोकीगीता सम्पूर्णा ।
**ॐतत्सद्ब्रह्मार्पणमस्तु ।**

*श्लोकरचनेसाठी वापरलेली वृत्ते—*

*चन्द्रकान्त (८/८/८/२ ) => श्लोक क्र. १, १२*    *सूर्यकान्त (८/८/८/३ ) => श्लोक क्र. ६*
*साकी (८/८/८/४ ) => श्लोक क्र. २, ३, ४, ५, ७, ८, १०, ११, १३, १४, १५, १६, १७, १८*
*हरिभगिनी (८/८/८/६ ) => श्लोक क्र. ९*

# ५. अष्टादशश्लोकी

अर्थात्

**श्रीमद्भगवद्गीतायाः अष्टादशानाम् अध्यायानां सारांशः।**

**ॐ नमो भगवते वासुदेवाय।**

| | | |
|---|---|---|
| (१) अर्जुन-विषाद-योगः | **सञ्जय आह रणाङ्गणवार्तां शृणु हे धृतराष्ट्र ।<br>समवेतास्तावकाः पाण्डवैः सार्धं युद्धाय ।<br>पार्थो माधवमाह स्वजनान्कथं मारयेय ।<br>पापभयेन हि कुलक्षयस्य त्यक्तवान्धनुश्च ।।** | चन्द्रकान्त-वृत्तम् (८/८/८/२) |

**पदच्छेदः** — सञ्जयः आह रणाङ्गणवार्ताम् शृणु हे धृतराष्ट्र। समवेताः तावकाः पाण्डवैः सार्धम् युद्धाय। पार्थः माधवम् आह स्वजनान् कथं मारयेय। पापभयेन हि कुलक्षयस्य त्यक्तवान् धनुः च ।।

| | | |
|---|---|---|
| (२) साङ्ख्य-योगः। | **वदति माधवो देहे नश्ये विषादेन किं पार्थ।<br>जन्ममरणचक्रमावर्तत आत्मा नश्यति नैव ।<br>जेता यदि वा महीं भोक्ष्यसे हतोऽपि विषमे स्वर्गम् ।<br>समत्वबुद्ध्या योधनमेव क्षत्रियस्य कर्तव्यम् ।।** | साकी-वृत्तम् (८/८/८/४) |

**पदच्छेदः**— वदति माधवः देहे नश्ये विषादेन किम् पार्थ। जन्ममरणचक्रम् आवर्तते आत्मा नश्यति न एव। जेता यदि वा महीम् भोक्ष्यसे हतः अपि विषमे स्वर्गम् । समत्वबुद्ध्या योधनम् एव क्षत्रियस्य कर्तव्यम् ।।

| | | |
|---|---|---|
| (३) कर्म-योगः। | **कर्मत्यजनं नैव हि योग्यं मनुष्यस्य जगतीह ।<br>आसक्तिं त्यक्त्वा तु हि नियतं कर्तव्यमेव कर्म ।<br>रिपुं कामरूपं हि विशस्य नियम्येन्द्रियग्रामम् ।<br>मनसो बुद्धेरपि यत्पारं ज्ञातव्यमात्मतत्त्वम् ।।** | साकी-वृत्तम् (८/८/८/४) |

**पदच्छेदः** — कर्मत्यजनम् न एव हि योग्यम् मनुष्यस्य जगति इह । आसक्तिम् त्यक्त्वा तु हि नियतम् कर्तव्यम् एव कर्म। रिपुम् कामरूपम् हि विशस्य नियम्य इन्द्रियग्रामम् । मनसः बुद्धेः अपि यत् पारम् ज्ञातव्यम् आत्मतत्त्वम् ।।

| | | |
|---|---|---|
| (४) ज्ञानकर्म-सन्न्यास-योगः। | **यदि मामवतारिणं ज्ञास्यसे कर्मणा न भत्स्यसे ।**<br>**कर्मजाश्च ते यज्ञाः कर्म हि ज्ञान एव लीयते ।**<br>**न विद्यते जगतीह पवित्रं ज्ञानेन हि सन्निभम् ।**<br>**उत्तिष्ठातिष्ठार्जुन सङ्ख्ये निराकृत्य संशयम् ।।** | सूर्यकान्त-वृत्तम् (८/८/८/३) |

**पदच्छेदः** — यदि मामवतारिणम् ज्ञास्यसे कर्मणा न भत्स्यसे । कर्मजाः च ते यज्ञाः कर्म हि ज्ञाने एव लीयते । न विद्यते जगति इह पवित्रम् ज्ञानेन हि सन्निभम् । उत्तिष्ठ आतिष्ठ अर्जुन सङ्ख्ये निराकृत्य संशयम् ।।

| | | |
|---|---|---|
| (५) कर्म-सन्न्यास-योगः। | **शङ्कतेऽर्जुनः कः श्रेयानिति योगो वा सन्न्यासः।**<br>**पार्थ उभावपि मोक्षदायकौ वदतीति वासुदेवः।**<br>**सन्न्यासी वै निरहङ्कारी जितात्मा स्थितप्रज्ञः।**<br>**योगेन विना सन्न्यासः कुह कर्मयोग आचर्यः।।** | साकी-वृत्तम् (८/८/८/४) |

**पदच्छेदः** — शङ्कते अर्जुनः कः श्रेयान् इति योगः वा सन्न्यासः। पार्थ उभौ अपि मोक्षदायकौ वदति इति वासुदेवः। सन्न्यासी वै निरहङ्कारी जितात्मा स्थितप्रज्ञः। योगेन विना सन्न्यासः कुह कर्मयोगः आचर्यः।।

| | | |
|---|---|---|
| (६) ध्यान-योगः। | **अभ्यासेन हि साध्यं ध्यानं कर्माण्यपि शाम्यन्ते ।**<br>**अपूर्णापि यदि योगसाधना जन्मान्तरेण फलते ।**<br>**ज्ञानिकर्मिसन्न्यासिभ्यश्च योगी हि रोचते मे ।**<br>**श्रद्धायुक्तो भजते यो मामात्मोद्धारं कुरुते ।।** | साकी-वृत्तम् (८/८/८/४) |

**पदच्छेदः**— अभ्यासेन हि साध्यम् ध्यानम् कर्माणि अपि शाम्यन्ते। अपूर्णा अपि यदि योगसाधना जन्मान्तरेण फलते। ज्ञानिकर्मिसन्न्यासिभ्यः च योगी हि रोचते मे । श्रद्धायुक्तः भजते यः माम् आत्मोद्धारम् कुरुते ।।

| | | |
|---|---|---|
| (७) ज्ञान-विज्ञान-योगः। | **अहं जीवनं तन्मात्राण्यपि जगदखिलं व्याप्नोमि ।**<br>**मम मायायास्त्रिगुणैरेव हि सर्वजना मुह्यन्ति ।**<br>**श्रद्धा यस्य हि यथा च यस्मिल्ँ लभते फलं तथैव ।**<br>**दुस्तरमायां तीर्त्वा मद्वित् प्रपद्यते मामेव ।।** | साकी-वृत्तम् (८/८/८/४) |

**पदच्छेदः** — अहम् तन्मात्राणि अपि जगद् अखिलम् व्याप्नोमि । मम मायायाः त्रिगुणैः एव हि सर्वजनाः मुह्यन्ति। श्रद्धा यस्य हि यथा च यस्मिन् लभते फलम् तथैव। दुस्तरमायाम् तीर्त्वा मद्वित् प्रपद्यते माम् एव ।।

| | | |
|---|---|---|
| (८) अक्षर-ब्रह्म-योगः। | **भावो देहावसाने यथा तथा गतिर्हि परत्र ।**<br>**युध्यस्वार्जुन स्मरन्नेव मामेष्यसि मद्गतिमेव ।**<br>**अव्यक्तोऽक्षर ॐकारोऽहं सनातनमहं ब्रह्म ।**<br>**स्मरति च योगी निरन्तरं मां जगत्सृती विज्ञाय ।।** | साकी-वृत्तम् (८/८/८/४) |

**पदच्छेदः** — भावः देहावसाने यथा तथा गतिः हि परत्र। युध्यस्व अर्जुन स्मरन् एव माम् एष्यसि मद्गतिम् एव। अव्यक्तः अक्षरः ॐकारः अहम् सनातनम् अहम् ब्रह्म। स्मरति च योगी निरन्तरम् माम् जगत्सृती विज्ञाय ।।

| | | |
|---|---|---|
| (९) राजविद्या-राजगुह्य-योगः। | **प्रलय-पुनर्भव-चक्रं प्रकृतेः सङ्गत्या हि प्रवर्तते ।**<br>**अहमध्यक्षो विदित्वैव मां कर्मबन्धनं विशीर्यते ।**<br>**विहाय सुखकामनामनित्यां व्रजन्ति ये च हि मां शरणम्।**<br>**उपासकानां नित्यं तेषां योगक्षेमं वहाम्यहम् ।।** | हरिभगिनी-वृत्तम् (८/८/८/६) |

**पदच्छेदः** — प्रलय-पुनर्भव-चक्रम् प्रकृतेः सङ्गत्या हि प्रवर्तते। अहम् अध्यक्षः। विदित्वा एव माम् कर्मबन्धनम् विशीर्यते। विहाय सुखकामनाम् अनित्याम् व्रजन्ति ये च हि माम् शरणम् । उपासकानाम् नित्यम् तेषाम् योगक्षेमम् वहामि अहम् ।।

| | | |
|---|---|---|
| (१०) विभूति-योगः। | **शृणुष्व मे वैभवं विशेषं सङ्क्षेपतो हि पार्थ ।**<br>**अहं सर्वभूतानां बीजं चेतना बृहत्साम ।**<br>**कामधुगश्वत्थोहं मेरू रुद्रो व्यवसायश्च ।**<br>**ओतप्रोतं जगद्वेविषे केवलमेकांशेन ।।** | साकी-वृत्तम् (८/८/८/४) |

**पदच्छेदः** — शृणुष्व मे वैभवम् विशेषम् सङ्क्षेपतः हि पार्थ । अहम् सर्वभूतानाम् बीजम् चेतना बृहत्साम। कामधुग् अश्वत्थः अहम् मेरुः रुद्रः व्यवसायः च । ओतप्रोतम् जगद् वेविषे केवलम् एकांशेन ।।

( मेरू रुद्रः = मेरुः + रुद्रः ) ( वेविषे = विष् ३ आ.प. उत्तमपुरुषैकवचनम् )

| | | |
|---|---|---|
| (११)<br>विश्वरूप -<br>दर्शन -<br>योगः। | **इत्युक्त्वा केशवोऽर्जुनाय दिव्यचक्षुषा दर्शयति ।<br>विश्वरूपमद्भुतं समग्रं तत्पश्यन्पार्थः स्तिमति ।<br>यदा तु घोरं भयङ्करं तद् दृष्ट्वा स कम्पते च भिया।<br>आरभते केशव उपदेशं पुनरपि सौम्येन हि वपुषा ।।** | हरिभगिनी-<br>वृत्तम्<br>(८/८/८/६) |

**पदच्छेदः** — इति उक्त्वा केशवः अर्जुनाय दिव्यचक्षुषा दर्शयति। विश्वरूपम् अद्भुतम् समग्रम् तत्पश्यन् पार्थः स्तिमति। यदा तु घोरम् भयङ्करम् तद् दृष्ट्वा सः कम्पते च भिया। आरभते केशवः उपदेशम् पुनः अपि सौम्येन हि वपुषा ।।

| | | |
|---|---|---|
| (१२)<br>भक्ति-<br>योगः। | **अव्यक्तोपासनात्प्रशंस्या सुलभा सगुणा भक्तिः।<br>भक्तो मे रोचते स्थिरमतिः कर्मफलं यस्त्यजति ।<br>श्रेयोऽभ्यासाज्ज्ञानं हि ततो ध्यानमपि त्यागश्च ।<br>मयि श्रद्दधद्भक्तः शान्तिं लभते हि निश्चयेन ।।** | साकी-<br>वृत्तम्<br>(८/८/८/४) |

**पदच्छेदः** — अव्यक्तोपासनात् प्रशंस्या सुलभा सगुणा भक्तिः। भक्तः मे रोचते स्थिरमतिः कर्मफलम् यः त्यजति। श्रेयः अभ्यासात् ज्ञानम् हि ततः ध्यानम् अपि त्यागः च। मयि श्रद्दधत् भक्तः शान्तिम् लभते हि निश्चयेन ।।

| | | |
|---|---|---|
| (१३)<br>क्षेत्रक्षेत्रज्ञ-<br>विभाग-<br>योगः। | **ब्रह्म हि सूक्ष्मतमं सर्वत्र ज्ञानं केवलमध्यात्मम् ।<br>विद्धि क्षेत्रमितीन्द्रियदेहं क्षेत्रज्ञं हि तथात्मानम् ।<br>पुरुषोऽयं भुङ्क्ते सुखदुःखे प्रकृत्या हि गुणसङ्गेन ।<br>हृदीश्वरो यो नित्यः साक्षी मुक्तिमार्गिभिर्ज्ञायेत ।।** | हरिभगिनी-<br>वृत्तम्<br>(८/८/८/६) |

**पदच्छेदः** — ब्रह्म हि सूक्ष्मतमम् सर्वत्र ज्ञानम् केवलम् अध्यात्मम् । विद्धि क्षेत्रम् अतीन्द्रियदेहम् क्षेत्रज्ञम् हि तथा आत्मानम् । पुरुषः अयम् भुङ्क्ते सुखदुःखे प्रकृत्या हि गुणसङ्गेन । हृदीश्वरः यः नित्यः साक्षी मुक्तिमार्गिभिः ज्ञायेत ।।

| | | |
|---|---|---|
| (१४)<br>गुणत्रय-<br>विभाग-<br>योगः। | **प्रमादेन मोहेन तमो वा कर्मफलेन हि रजो यथा ।<br>सुखसङ्गेन हि सत्त्वगुणश्च जीवं बध्नाति वै तथा ।<br>त्रिगुणान्वितमायायाः पारं द्रष्टा यो मां प्रपश्यति ।<br>जन्ममृत्युचक्रं परिहार्य योगी ब्रह्मपदं याति ।।** | हरिभगिनी-<br>वृत्तम्<br>(८/८/८/६) |

**पदच्छेदः** — प्रमादेन मोहेन तमः वा कर्मफलेन हि रजः यथा। सुखसङ्गेन हि सत्त्वगुणः च जीवम् बध्नाति वै तथा। त्रिगुण-अन्वित-मायायाः पारम् द्रष्टा यः माम् प्रपश्यति। जन्ममृत्युचक्रम् परिहार्य योगी ब्रह्मपदम् याति ।।

| | | |
|---|---|---|
| (१५)<br>पुरुषोत्तम-योगः। | **संसाराश्वत्थो बहुशाखं कर्मविषयबद्धोऽयम् ।<br>छित्त्वा ह्यसङ्गशस्त्रेण हि तं विज्ञातव्यं मूलम् ।<br>उत्तम एव स पुरुषो ज्ञेयः क्षराक्षरादपि पारम् ।<br>अंशेन हि यो जीवो भूत्वा उपभुङ्क्ते वै भोगम् ।।** | साकी-वृत्तम्<br>(८/८/८/४) |

**पदच्छेदः** — संसाराश्वत्थः बहुशाखम् कर्मविषयबद्धः अयम् । छित्त्वा हि असङ्गशस्त्रेण हि तम् विज्ञातव्यम् मूलम् । उत्तमः एव सः पुरुषः ज्ञेयः क्षराक्षरात् अपि पारम् । अंशेन हि यः जीवः भूत्वा उपभुङ्क्ते वै भोगम् ।।

| | | |
|---|---|---|
| (१६)<br>दैवासुर-सम्पद्-विभाग-योगः। | **ऋजुता शुद्धिर्नतिश्च धैर्यं दैवी सम्पद्विमुक्तये ।<br>दम्भो दर्पो दमः प्रसक्तिः सम्पदासुरी निबद्धये ।<br>कामं क्रोधं तथैव लोभं त्यक्त्वा नरकस्य कारणम् ।<br>शास्त्रोक्तं यद्विधिवत्कार्यं श्रेयस्करमनुसरणीयम् ।।** | हरिभगिनी-वृत्तम्<br>(८/८/८/६) |

**पदच्छेदः** — ऋजुता शुद्धिः नतिः च धैर्यम् दैवी सम्पद् विमुक्तये । दम्भः दर्पः दमः प्रसक्तिः सम्पद् आसुरी निबद्धये । कामम् क्रोधम् तथा एव लोभम् त्यक्त्वा नरकस्य कारणम् । शास्त्रोक्तम् यद् विधिवत् कार्यम् श्रेयस्करम् अनुसरणीयम् ।।

| | | |
|---|---|---|
| (१७)<br>श्रद्धात्रय-विभाग-योगः। | **बीजं यत्सात्त्विकं राजसं तामसमथवा यस्य यथा ।<br>भवति श्रद्धा रुचिस्तथैव च बुद्धिः कर्म हि तस्य तथा।<br>ओमित्येकाक्षरं ब्रह्म यो मोक्षं काङ्क्षत्युदाहरेत् ।<br>यज्ञं दानं तपश्च कर्म हि तत्सद्ब्रह्मार्पणं भवेत् ।।** | हरिभगिनी-वृत्तम्<br>(८/८/८/६) |

**पदच्छेदः** — बीजम् यत् सात्त्विकम् राजसम् तामसम् अथवा यस्य यथा । भवति श्रद्धा रुचिः तथा एव च बुद्धिः कर्म हि तस्य तथा । ओम् इति एकाक्षरम् ब्रह्म यः मोक्षम् काङ्क्षति उदाहरेत् । यज्ञम् दानम् तपः च कर्म हि तत् सद् ब्रह्मार्पणम् भवेत् ।।

| (१८) मोक्ष-सन्न्यास-योगः। | सङ्गफलाशे त्यक्त्वा कार्यं स्वभावजं नियतं कर्म ।<br>मर्मवचः श्रुत्वेदमच्युतात् पार्थो धनुर्धरः प्राह ।<br>हे योगेश्वर जन्म कृतार्थं शङ्का पूर्णतया विगता ।<br>वदति सञ्जयो जयो निश्चितो भवेद्यत्र भगवद्गीता ।। | हरिभगिनी-वृत्तम् (८/८/८/६ ) |
|---|---|---|

**पदच्छेदः** — सङ्गफलाशे त्यक्त्वा कार्यम् स्वभावजम् नियतम् कर्म। मर्मवचः श्रुत्वा इदम् अच्युतात् पार्थः धनुर्धरः प्राह। हे योगेश्वर, जन्म कृतार्थम् शङ्का पूर्णतया विगता। वदति सञ्जयः जयः निश्चितः भवेद् यत्र भगवद्गीता ।।

इति श्रीमद्भगवद्गीतायाः सारांशरूपात्मिका राजेन्द्रशर्मणा विरचिता अष्टादशश्लोकी सम्पूर्णा ।

**ॐ तत्सद्ब्रह्मार्पणमस्तु ।**

**रचयिता** — राजेन्द्र दातार, बदलापूर
१०१ A, साई-श्रद्धा, म्हाडा वसाहत, कुळगाव-बदलापूर,
जि.ठाणे, PIN ४२१५०३ दूरभाषाङ्कः - ९४२१६२६८१४ , ९१४६४३३५१८

---

**सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै ।**
**तेजस्वि नावधीतमस्तु । मा विद्विषावहै । ॐ शान्तिः शान्तिः शान्तिः ।।**

**पदच्छेदः** – सह नौ अवतु । सह नौ भुनक्तु । सह वीर्यं करवावहै ।
तेजस्वि नौ अधीतम् अस्तु । मा विद्विषावहै । ॐ शान्तिः शान्तिः शान्तिः ।।

**अन्वयः** –[ ईश्वरः] नौ (आवाम् ) सह अवतु। [ ईश्वरः] नौ (आवाम् ) सह भुनक्तु।
सह वीर्यं (आवाम् ) करवावहै। नौ (आवयोः) अधीतम् तेजस्वि अस्तु।
(आवाम् ) मा विद्विषावहै । ॐ शान्तिः शान्तिः शान्तिः।।

ईश्वर आम्हा दोघांना (गुरुशिष्यांना) एकत्र राखो. आम्हा दोघांचे बरोबरच रक्षण / पोषण करो. आम्ही जोडीने पराक्रम करू. आमचे दोघांचे मिळवलेले ज्ञान तेजस्वी असू दे. आम्ही एकमेकांचा द्वेष करू नये. ।। ॐ शान्तिः शान्तिः शान्तिः ।।

---

## संस्कृताभ्यासार्थम् उपयुक्तानि राजेन्द्रदातार-लिखितानि पुस्तकानि

1. **धात्वङ्गमञ्जरी ( 1 )** ( ₹ 100 )

प्रथम-गणसमूहस्थानां (1, 4, 6, 10) धातूनां सार्वधातुक- कालार्थ-रूपाणि साधयितुं सुसूत्रं विवेचनम्। प्रथम-गणसमूहस्थानां सर्वधातूनां (प्रायः 1900) वर्गीकरणेन सह समग्रा सूचिः। अनुमित्या 550 धातवः इङ्ग्लिशभाषार्थेन मराठीभाषार्थेन च सह कर्मणि लट्रूपैः सह च प्रदत्ताः। पश्चावरणे संस्कृत-वर्णसाधना-सरणिः। सर्वं विवेचनं संस्कृतमाध्यमेन।

2. **धात्वङ्गमञ्जरी ( 2 )** ( ₹ 150 )

द्वितीय-गणसमूहस्थाः (2, 3, 5, 7, 8, 9) सर्वधातवः तेषाम् इङ्ग्लिशभाषार्थेन मराठीभाषार्थेन च सह कर्मणि लट्रूपैः सह च प्रदत्ताः। पित्-अपित्-प्रत्ययोगेन तेषां सार्वधातुक-कालार्थ-रूपाणि साधयितुं सुसूत्रं विवेचनम्। विशेषपद्धत्या द्वितीय-गणसमूहस्थानां सर्वधातूनां वर्गीकरणम्। पश्चावरणे कालार्थ-प्रत्यय-सरणिः। सर्वं विवेचनं संस्कृतमाध्यमेन।

3. **सर्वादीनि सर्वनामानि** ( ₹ 40 )

सर्वादिगणस्थानां 35 प्रातिपदिकानां विभक्तिरूपाणि तथा च तद्विषये महत्त्वपूर्णाः टिप्पण्यः। Explained in English.

4. **वानसनामावली** Names of Plants ( ₹ 20 )

( English - Marathi – Saḿskṛta - Botanical )

5. **संजीवन-तत्त्व-संकलन** ( ₹ 45 )

6. **श्रीरामरक्षास्तोत्रम्** ( पदच्छेद-अन्वय-अर्थ-सहितम् ) ( ₹ 20 )

7. **श्रीप्रज्ञावर्धनस्तोत्र** ( पदच्छेद, अन्वय, अर्थ व स्पष्टीकरण यांसह ) ( ₹ 20 )

8. **श्रीहरिपाठः** ( संत ज्ञानेश्वरांचा हरिपाठ, त्याचा संस्कृतानुवाद, पसायदान, त्याचा संस्कृतानुवाद, अठरा श्लोकी गीता-मराठी व संस्कृत ) ( ₹ 60 )

9. **मेघदूतम्** ( स्वैर, संक्षिप्त, मराठी पद्यानुवाद ) ( ₹ 20 )

10. **नवनीतम्** ( संस्कृत-काव्यरचना-सङ्ग्रहः वृत्तबद्धरचनाभ्यासः ) ( आगामि )

**संस्कृत – प्रबोधिनी,**

101 A, साई-श्रद्धा, म्हाडा वसाहत, कुळगाव-बदलापूर,
जि.ठाणे, PIN 421503 फोन – 9421626814



राजेन्द्र नारायण दातार

**परिचयः। —**

- जन्म – १९६१
- **लौकिक-शिक्षणम् – विज्ञान-पदवीपर्यन्तम् ।**

**संस्कृतविषयकम् —**

- **पारम्परिक-वैदिकी , संस्कृत-कोविदः , संस्कृत-साहित्य-साधना।**
  **छन्दस्वी संस्कृत-अभ्यासकः।**
- १९९२ तः प्रौढानां च शालीय-विद्यार्थिनां च कृते मार्गदर्शन-वर्गाः।
  विविधस्पर्धानां परीक्षाणां च आयोजनम्।
- वृत्तबद्ध-काव्यरचनाः (मराठीसंस्कृतयोः); मराठी/ हिन्दी- गीतानां संस्कृतानुवादः ; पत्रिकासु लेखनम् ; संस्कृतेन ध्वन्यारोपणम् (Dubbing)
- **प्रकाशितानि पुस्तकानि —**
  - धात्वङ्गमञ्जरी (१) & (२)
  - संजीवन-तत्त्व-संकलन
  - सर्वादीनि सर्वनामानि
  - श्रीहरिपाठः (हरिपाठः संस्कृते)
  - वानसनामावली Names of Plants
  - श्रीरामरक्षास्तोत्रम् (पदच्छेदसहितम्)
  - श्रीप्रज्ञावर्धनस्तोत्र (पदच्छेदासह, सटीक)
  - नवनीतम् (संस्कृत-काव्यरचना-सङ्ग्रहः)
- **पुरस्काराः —**
  - २००९ तमे ख्रिस्ताब्दे संस्कृत-भाषा-संस्थया सम्मानितः।
  - २०१६ तमे ख्रिस्ताब्दे 'महाराष्ट्र-सेवा-सङ्घः, मुलुन्ड,मुम्बई' द्वारा उद्धवराव आठले महोदयानां संस्मरणार्थं **संस्कृतभाषाप्रसार-पुरस्कारः।**
- महाराष्ट्र-राज्य-पाठ्यपुस्तक-निर्मिति-मण्डले निमन्त्रित-सदस्यः।